# पाठ

# श्री नारायण कवचम्

# श्रीविष्णुसहस्त्रनामस्तोत्रम्

वक्रतुण्ड महाकाय सूर्य कोटि समप्रभा।
निर्विघ्नं कुरु मे देव सर्व कार्येषु सर्वदा।।

## महामृत्युन्जय मंत्र

ॐ त्रयम्बकं यजामहे सुगन्धिम् पुष्टि वर्धनम्।
उर्वारुक मिव बंधनान् मृत्योर्मुक्षीय मामृतात्।।

## आरोग्य मंत्र ( नारायणीयम )

अस्मिन् परात्मन् ननु पाद्मकल्पे त्वमित्थ मुत्थापित पद्मयोनिः।
अनन्तभूमा मम रोगराशिं निरुन्धि वातालयवास विष्णो।।

## ध्रुव मंत्र ( श्रीमद्‌भागवत )

योऽन्तः प्रविष्य मम वाचमिमां प्रसुप्तां
संजीवयत्यखिल शक्तिधरः स्वधाम्नां
अन्यांश्च हस्तचरण श्रवणत्वगादीन्
प्राणान्नमो भगवते पुरुषाय तुभ्यम्

**यत्र, योगेश्वरः कृष्णो यत्र, पार्थो, धनुर्धरः।**
**तत्र, श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम।।**

# गीता ध्यानम्

ॐ पार्थाय प्रतिबोधितां भगवता नारायणेन स्वयम्
व्यासेन ग्रथितां पुराणमुनिना मध्ये महाभारतम्।
अद्वैतामृतवर्षिणीं भगवतीमष्टादशाध्यायिनीम्
अम्ब त्वामनुसन्दधामि भगवद्गीते भवद्वेषिणीम्॥1॥
नमोऽस्तु ते व्यास विशालबुद्धे फुल्लारविन्दायतपत्रनेत्र।
येन त्वया भारततैलपूर्णः प्रज्वालितो ज्ञानमयः प्रदीपः॥2॥
प्रपन्नपारिजाताय तोत्रवेत्रैकपाणये।
ज्ञानमुद्राय कृष्णाय गीतामृतंदुहे नमः॥3॥
सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत्॥4॥
वसुदेवसुतं देवं कंसचाणूरमर्दनम्।
देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम्॥5॥
भीष्मद्रोणतटा जयद्रथजला गान्धारनीलोत्पला
शल्यग्राहवती कृपेण वहनी कर्णेन वेलाकुला।
अश्वत्थामविकर्णघोरमकरा दुर्योधनवर्तिनी
सोत्तीर्णा खलु पाण्डवैः रणनदी कैवर्तकः केशवः॥6॥
पाराशर्यवचस्सरोजममलं गीतार्थगन्धोत्कटं
नानाख्यानककेसरं हरिकथासम्बोधनाबोधितम्।
लोके सज्जनषट्पदैरहरहः पेपीयमानं मुदा
भूयाद् भारतपंकजं कलिमलप्रध्वंसि नः श्रेयसे॥7॥
मूकं करोति वाचालं पङ्गु लङ्घयते गिरिम्।
यत्कृपा तमहं वन्दे परमानन्दमाधवम्॥8॥
यं ब्रह्मावरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवैः
वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः॥
ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो।
यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः॥9॥

# गुरु वन्दना

ॐ अज्ञानतिमिरान्धस्य, ज्ञानाञ्जनशलाकया।
चक्षुरून्मीलितं येन, तस्मै श्री गुरुवे नमः॥

मन्त्र सत्यं पूजा सत्यं, सत्यमेव निरंजनम्।
गुरुर्वाक्यम सदा सत्यं, सत्यमेव परं पदम्॥

अखण्डमण्डलाकारं व्याप्तं, येन चराचरम्।
तत्पदं दर्शितं येन, तस्मै श्री गुरुवे नमः॥

पितृ मातृ सुहृद बन्धु, विद्या तीर्थानि देवता।
न तुल्यं गुरूनाम् शीघ्रं, स्पर्शमेव परं पदम्॥

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।
गुरुः साक्षात् परब्रह्म, तस्मै श्रीगुरुवे नमः॥

ध्यानमूलं गुरोर्मूर्ति, पूजामूलं गुरोः पदम्।
मंत्रमूलं गुरोर्वाक्यम्, मोक्ष मूलं गुरोः कृपा॥

ब्रह्मानन्दं परम सुखदं, केवलं ज्ञानमूर्तिम्।
द्वन्द्वातीतं गगनसदृशं, तत्त्वमस्यादिलक्ष्यम्॥

एकं नित्यं विमलमचलं, सर्वधीसाक्षिभूतं।
भावातीतं त्रिगुणरहितं, सद्गुरुं तं नमामि॥



# विनयस्तोत्राणि

स जयति सिन्धुरवदनो देवो यत्पादपङ्कजस्मरणम् ।
वासरमणिरिव तमसां राशीन्नाशयति विघ्नानाम् ॥1॥

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।
लम्बोदरश्च विकटो विघ्ननाशो विनायकः ॥2॥

धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।
द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥3॥

विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ।
संग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥4॥

शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥5॥

व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् ।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥6॥

व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे ।
नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः ॥7॥

अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः ।
अभाललोचनः शम्भुर्भगवान् वादरायणः ॥8॥



# नवग्रह स्तोत्रम्

जपाकुसुम सङ्काशं काश्यपेयं महाद्युतिम।
तमोऽरिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम्॥1॥

दधिशङ्खतुषाराभं क्षीरोदार्णव सम्भवम्।
नमामि शशिनं सोमं शंभोर्मुकुट भूषणम्॥2॥

धरणी गर्भ संभूतं विद्युत्कान्ति समप्रभम्।
कुमारं शक्तिं हस्तं तं मंगलं प्रणमाम्यहम्॥3॥

प्रियङ्गुकलिकाश्यामं रूपेणाप्रतिमं बुधम्।
सौम्यं सौम्य गुणोपेतं तं बुधं प्रणमाम्यहम्॥4॥

देवानां च ऋषीणां च गुरुं काञ्चनसन्निभम्।
बुद्धि भूतं त्रिलोकेशं तं नमामि बृहस्पतिम्॥5॥

हिम कुन्दमृणालाभं दैत्यानां परमं गुरुम्।
सर्वशास्त्रप्रवक्तारं भार्गवं प्रणमाम्यहम्॥6॥

नीलाञ्जनसमाभासं रविपुत्रं यमाग्रजम्।
छायामार्तण्डसम्भूतं तं नमामि शनैश्चरम्॥7॥

अर्धकायं महावीर्यं चन्द्रादित्यविमर्दनम्।
सिंहिकागर्भ सम्भूतं तं राहुं प्रणमाम्यहम्॥8॥

पलाशपुष्पसङ्काशं तारकाग्रह मस्तकम्।
रौद्रं रौद्रात्मकं घोरं तं केतुं प्रणमाम्यहम्॥9॥

## एकश्लोकी नवग्रह स्तोत्रम्

ब्रह्मा मुरारि त्रिपुरान्तकारी भानुः शशी भूमिसुतोबुधश्च।
गुरुश्च शुक्रः शनि राहुः केतवः कुर्वन्तु सर्वे मम सुप्रभातम्॥

# श्री नारायण कवचम्

## ॐ श्री विष्णवे नमः ( तीन बार )

## नमो नारायणाय ( तीन बार )

## ॐ नमो भगवते वासुदेवाय ( तीन बार )

आत्मानं परमं ध्यायेद् ध्येयं षट्शक्तिभिर्युतम् ।
विद्यातेजस्तपोमूर्तिमिमं मन्त्रमुदाहरेत् ॥1॥

ॐ हरिर्विदध्यान्मम सर्वरक्षां न्यस्ताङ्घ्रिपद्मः पतगेन्द्रपृष्ठे ।
दरारिचर्मासिगदेषुचाप पाशान् दधानोऽष्टगुणोऽष्टबाहुः ॥2॥

जलेषु मां रक्षतु मत्स्यमूर्ति र्यादोगणेभ्यो वरुणस्य पाशात् ।
स्थलेषु मायावटुवामनोऽव्यात् त्रिविक्रमः खेऽवतु विश्वरूपः ॥3॥

दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहोऽसुरयूथपारिः ।
विमुञ्चतो यस्य महाट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः ॥4॥

रक्षत्वसौ माध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः ।
रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद् भरताग्रजोऽस्मान् ॥5॥

मामुग्रधर्मादखिलात् प्रमादान्नारायणः पातु नरश्च हासात् ।
दत्तस्त्वयोगादथ योगनाथः पायाद् गुणेशः कपिलः कर्मबन्धात् ॥6॥

सनत्कुमारोऽवतु कामदेवा द्धयशीर्षा मां पथि देवहेलनात् ।
देवर्षिवर्यः पुरुषार्चनान्तरात् कूर्मो हरिर्मां निरयादशेषात् ॥7॥

धन्वन्तरिर्भगवान् पात्वपथ्याद् द्वन्द्वाद् भयादृषभो निर्जितात्मा ।
यज्ञश्च लोकादवताज्जनान्ताद् बलो गणात् क्रोधवशादहीन्द्रः ॥8॥

द्वैपायनो भगवानप्रबोधाद् बुद्धस्तु पाखण्डगणात् प्रमादात् ।
कल्किः कलेः कालमलात् प्रपातु धर्मावनायोरुकृतावतारः ॥9॥

मां केशवो गदया प्रातरव्याद् गोविन्द आसङ्गवमात्तवेणुः ।
नारायणः प्राह्ण उदात्तशक्तिर्मध्यन्दिने विष्णुररीन्द्रपाणिः ॥10॥

देवोऽपराह्णे मधुहोग्रधन्वा सायं त्रिधामावतु माधवो माम् ।
दोषे हृषीकेश उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः ॥11॥

श्रीवत्सधामापररात्र ईशः प्रत्यूष ईशोऽसिधरो जनार्दनः ।
दामोदरोऽव्यादनुसन्ध्यं प्रभाते विश्वेश्वरो भगवान् कालमूर्तिः ॥12॥
चक्रं युगान्तानलतिग्मनेमि भ्रमत् समन्ताद् भगवत्प्रयुक्तम् ।
दंदग्धि दन्दग्ध्यरिसैन्यमाशु कक्षं यथा वातसखो हुताशः ॥13॥
गदेऽशनिस्पर्शनविस्फुलिङ्गे निष्पिण्ढि निष्पिण्ढ्यजितप्रियासि ।
कूष्माण्डवैनायकयक्षरक्षो भूतग्रहांश्चूर्णय चूर्णयारीन् ॥14॥
त्वं यातुधान प्रमथप्रेतमातृ पिशाचविप्रग्रहघोरदृष्टीन् ।
दरेन्द्र विद्रावय कृष्णपूरितो भीमस्वनोऽरेर्हृदयानि कम्पयन् ॥15॥
त्वं तिग्मधारासिवरारिसैन्य मीशप्रयुक्तो मम छिन्धि छिन्धि ।
चक्षूंषि चर्मञ्छतचन्द्र छादय द्विषामघोनां हर पापचक्षुषाम् ॥16॥
यन्नो भयं ग्रहेभ्योऽभूत् केतुभ्यो नृभ्य एव च ।
सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योंऽहोभ्य एव वा ॥17॥
सर्वाण्येतानि भगवन्नाम रूपास्त्रकीर्तनात् ।
प्रयान्तु संक्षयं सद्यो ये नः श्रेयःप्रतीपकाः ॥18॥
गरुडो भगवान् स्तोत्रस्तोभश्छन्दोमयः प्रभुः ।
रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनः स्वनामभिः ॥19॥
सर्वापद्भ्यो हरेर्नामरूपयानायुधानि नः ।
बुद्धीन्द्रियमनःप्राणान् पान्तु पार्षदभूषणाः ॥20॥
यथा हि भगवानेव वस्तुतः सदसच्च यत् ।
सत्येनानेन नः सर्वे यान्तु नाशमुपद्रवाः ॥21॥
यथैकात्म्यानुभावानां विकल्परहितः स्वयम् ।
भूषणायुधलिङ्गाख्या धत्ते शक्तीः स्वमायया ॥22॥
तेनैव सत्यमानेन सर्वज्ञो भगवान् हरिः ।
पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥23॥
विदिक्षु दिक्षूर्ध्वमधः समन्तादन्तर्बहिर्भगवान् नारसिंहः ।
प्रहापयँल्लोकभयं स्वनेन स्वतेजसा ग्रस्तसमस्ततेजाः ॥24॥

# श्री विष्णुसहस्त्रनाम्

## ध्यानम्

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगन सदृशं मेघवर्णं शुभाङ्गम्।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यान-गम्यं
वन्दे विष्णुं भव-भयहरं सर्वलोकैक-नाथम्।।

ॐ विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः।।1।।

पूतात्मा परमात्मा च मुक्तानां परमा गतिः।
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च।।2।।

योगो योगविदां नेता प्रधानपुरुषेश्वरः।
नारसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः।।3।।

सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः।
सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः।।4।।

स्वयम्भूः शम्भुरादित्यः पुष्कराक्षो महास्वनः।
अनादिनिधनो धाता विधाता धातुरुत्तमः।।5।।

अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः।
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः।।6।।

अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः।
प्रभूतस्त्रिककुब्धाम पवित्रं मङ्गलं परम्।।7।।

ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः।।8।।

ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः।
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान्।।9।।

सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः।
अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः।।10।।

अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः।
वृषाकपिरमेयात्मा सर्वयोगविनिःसृतः।।11।।

वसुर्वसुमनाः सत्यः समात्मा सम्मितः समः।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः।।12।।

रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः।
अमृतः शाश्वतस्थाणुर्वरारोहो महातपाः।।13।।

सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः।
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित् कविः।।14।।

लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः।
चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः।।15।।

भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः।
अनघो विजयो जेता विश्वयोनिः पुनर्वसुः।।16।।

उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः।
अतीन्द्रः संग्रहः सर्गो धृतात्मा नियमो यमः।।17।।

वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः।
अतीन्द्रियो महामायो महोत्साहो महाबलः।।18।।

महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः।
अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक्।।19।।

महेष्वासो महीभर्ता श्रीनिवासः सतां गतिः।
अनिरुद्धः सुरानन्दो गोविन्दो गोविदां पतिः।।20।।

मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः।
हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः।।21।।

अमृत्युः सर्वदृक् सिंहः सन्धाता सन्धिमान् स्थिरः।
अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा।।22।।

गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः।
निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः॥23॥

अग्रणीर्ग्रामणीः श्रीमान् न्यायो नेता समीरणः।
सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात्॥24॥

आवर्तनो निवृत्तात्मा संवृतः सम्प्रमर्दनः।
अहःसंवर्तको वह्निरनिलो धरणीधरः॥25॥

सुप्रसादः प्रसन्नात्मा विश्वधृग् विश्वभुग् विभुः।
सत्कर्ता सत्कृतः साधुर्जह्नुर्नारायणो नरः॥26॥

असंख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः।
सिद्धार्थः सिद्धसङ्कल्पः सिद्धिदः सिद्धिसाधनः ॥27॥

वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः।
वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः॥28॥

सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः।
नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः॥29॥

ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः।
ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः॥30॥

अमृतांशूद्भवो भानुः शशबिन्दुः सुरेश्वरः।
औषधं जगतः सेतुः सत्यधर्मपराक्रमः॥31॥

भूतभव्यभवन्नाथः पवनः पावनोऽनलः।
कामहा कामकृत् कान्तः कामः कामप्रदः प्रभुः॥32॥

युगादिकृद् युगावर्तो नैकमायो महाशनः।
अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित्॥33॥

इष्टोऽविशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः।
क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः॥34॥

अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः।
अपां निधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः॥35॥

स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः।
वासुदेवो बृहद्भानुरादिदेवः पुरन्दरः॥36॥

अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः।
अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः॥37॥

पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत्।
महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥38॥

अतुलः शरभो भीमः समयज्ञो हविर्हरिः।
सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिञ्जयः॥39॥

विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः।
महीधरो महाभागो वेगवानमिताशनः॥40॥

उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः।
करणं कारणं कर्ता विकर्ता गहनो गुहः॥41॥

व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः।
परर्द्धि परमस्पष्टस्तुष्टः पुष्टः शुभेक्षणः॥42॥

रामो विरामो विरजो मार्गो नेयो नयोऽनयः।
वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः॥43॥

वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः।
हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः॥44॥

ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः।
उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः॥45॥

विस्तारः स्थावरस्थाणुः प्रमाणं बीजमव्ययम्।
अर्थोऽनर्थो महाकोशो महाभोगो महाधनः॥46॥

अनिर्विण्णः स्थविष्ठोऽभूर्धर्मयूपो महामखः।
नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः॥47॥

यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः।
सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम्॥48॥

सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत्।
मनोहरो जितक्रोधो वीरबाहुर्विदारणः॥49॥

स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत्।
वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः॥50॥

धर्मगुब्धर्मकृद्धर्मी सदसत् क्षरमक्षरम्।
अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः॥51॥

गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः।
आदिदेवो महादेवो देवेशो देवभृद्गुरुः॥52॥

उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः।
शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः॥53॥

सोमपोऽमृतपः सोमः पुरुजित् पुरुसत्तमः।
विनयो जयः सत्यसन्धो दाशार्हः सात्त्वतां पतिः॥54॥

जीवो विनयितासाक्षी मुकुन्दोऽमितविक्रमः।
अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः॥55॥

अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः।
आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः॥56॥

महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः।
त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥57॥

महावराहो गोविन्दः सुषेणः कनकाङ्गदी।
गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः॥58॥

वेधाः स्वाङ्गोऽजितः कृष्णो दृढः सङ्कर्षणोऽच्युतः।
वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः॥59॥

भगवान् भगहानन्दी वनमाली हलायुधः।
आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः॥60॥

सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः।
दिवःस्पृक् सर्वदृग्व्यासो वाचस्पतिरयोनिजः॥61॥

त्रिसामा सामगः साम निर्वाणं भेषजं भिषक्।
संन्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणम्॥62॥

शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः।
गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः॥63॥

अनिवर्ती निवृत्तात्मा सङ्क्षेप्ता क्षेमकृच्छिवः।
श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतां वरः॥64॥

श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः।
श्रीधरः श्रीकरः श्रेयः श्रीमाँल्लोकत्रयाश्रयः॥65॥

स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः।
विजितात्माविधेयात्मा सत्कीर्तिश्छिन्नसंशयः॥66॥

उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतस्थिरः।
भूशयो भूषणो भूतिर्विशोकः शोकनाशनः॥67॥

अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः।
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः॥68॥

कालनेमिनिहा वीरः शौरिः शूरजनेश्वरः।
त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः॥69॥

कामदेवः कामपालः कामी कान्तः कृतागमः।
अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः॥70॥

ब्रह्मण्यो ब्रह्मकृद् ब्रह्मा ब्रह्म ब्रह्मविवर्धनः।
ब्रह्मविद् ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः॥71॥

महाक्रमो महाकर्मा महातेजा महोरगः।
महाक्रतुर्महायज्वा महायज्ञो महाहविः॥72॥

स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः।
पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः॥73॥

मनोजवस्तीर्थकरो वसुरेता वसुप्रदः।
वसुप्रदो वासुदेवो वसुर्वसुमना हविः॥74॥

सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः।
शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः॥75॥

भूतावासो वासुदेवः सर्वासुनिलयोऽनलः।
दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः॥76॥

विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान्।
अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः॥77॥

एको नैकः सवः कः किं यत्तत्पदमनुत्तमम्।
लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः॥78॥

सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी।
वीरहा विषमः शून्यो घृताशीरचलश्चलः॥79॥

अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक्।
सुमेधा मेधजो धन्यः सत्यमेधा धराधरः॥80॥

तेजोवृषो द्युतिधरः सर्वशस्त्रभृतां वरः।
प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः॥81॥

चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः।
चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात्॥82॥

समावर्तोऽनिवृत्तात्मा दुर्जयो दुरतिक्रमः।
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा।।83।।

शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः।
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः।।84।।

उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः।
अर्को वाजसनः शृङ्गी जयन्तः सर्वविज्जयी।।85।।

सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः।
महाह्रदो महागर्तो महाभूतो महानिधिः।।86।।

कुमुदः कुन्दरः कुन्दः पर्जन्यः पावनोऽनिलः।
अमृतांशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः।।87।।

सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः।
न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिषूदनः।।88।।

सहस्त्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः।
अमूर्तिरनघोऽचिन्त्यो भयकृद् भयनाशनः।।89।।

अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महान्।
अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्धनः।।90।।

भारभृत् कथितो योगी योगीशः सर्वकामदः।
आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः।।91।।

धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः।
अपराजितः सर्वसहो नियन्तानियमोऽयमः।।92।।

सत्त्ववान् सात्त्विकः सत्यः सत्यधर्मपरायणः।
अभिप्रायः प्रियार्होऽर्हः प्रियकृत् प्रीतिवर्धनः।।93।।

विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग् विभुः।
रविर्विरोचनः सूर्यः सविता रविलोचनः।।94।।

अनन्तो हुतभुग् भोक्ता सुखदो नैकजोऽग्रजः।
अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः।।95।।

सनात् सनातनतमः कपिलः कपिरव्ययः।
स्वस्तिदः स्वस्तिकृत् स्वस्ति स्वस्तिभुक् स्वस्तिदक्षिणः।।96।।

अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः।
शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः।।97।।

अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः।।98।।

उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः।
वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः।।99।।

अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः।
चतुरश्रो गभीरात्मा विदिशो व्यादिशो दिशः।।100।।

अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः।
जननो जनजन्मादिर्भीमो भीमपराक्रमः।।101।।

आधारनिलयोऽधाता पुष्पहासः प्रजागरः।
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः।।102।।

प्रमाणं प्राणनिलयः प्राणभृत् प्राणजीवनः।
तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः।।103।।

भूर्भुवःस्वस्तरुस्तारः सविता प्रपितामहः।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः।।104।।

यज्ञभृद् यज्ञकृद् यज्ञी यज्ञभुग् यज्ञसाधनः।
यज्ञान्तकृद् यज्ञगुह्यमन्नमन्नाद एव च।।105।।

आत्मयोनिः स्वयंजातो वैखानः सामगायनः।
देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः।।106।।

शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः।
रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः।।107।।

## ।। सर्वप्रहरणायुध ॐ नम इति।।

*( तीन बार )*

श्री राम राम रामेति रमे रामे मनोरमे।
सहस्त्रनाम-तत्तुल्यं राम नाम वरानने।।
*राम नाम वरानन ॐ नम इति ।।*

**अष्टलक्ष्म्यै प्रणाम मंत्र**

1. ॐ आद्य लक्ष्म्यै नमः
2. ॐ विद्या लक्ष्म्यै नमः
3. ॐ सौभाग्य लक्ष्म्यै नमः
4. ॐ अमृत लक्ष्म्यै नमः
5. ॐ काल लक्ष्म्यै नमः
6. ॐ सत्य लक्ष्म्यै नमः
7. ॐ भोग लक्ष्म्यै नमः
8. ॐ योग लक्ष्म्यै नमः

## क्षमा मंत्र

करचरणकृतं वाक्कायजं कर्मजं वा,
श्रवण नयनजं वा मानसं वापराधम्।
विहितमविहितं वा सर्वमेतत्क्षमस्व,
जय जय करुणाब्धे श्री महादेव शम्भो॥

## प्रणाम मंत्र

ॐ कृष्णाय वासुदेवाय हरये परमात्मने,
प्रणतः क्लेशनाशाय गोविन्दाय नमो नमः॥

## सूर्य मत्रं (तीन बार)

ॐ घृणिः सूर्य आदित्य ओम्॥

## महामृत्युन्जय मंत्र (तीन बार)

ॐ त्रयम्बकं यजामहे सुगन्धिम् पुष्टि वर्धनम्।
उर्वारुक मिव बंधनान् मृत्योर्मुक्षीय मामृतात्॥

*(तीन बार)*

**यत्र, योगेश्वरः कृष्णो यत्र, पार्थो, धनुर्धरः।**
**तत्र, श्रीर्विजयो भूतिध्रुवा नीतिर्मतिर्मम॥**

यत्र, योगेश्वरः, कृष्णः, यत्र, पार्थः, धनुर्धरः,
तत्र, श्रीः, विजयः, भूतिः, ध्रुवा, नीतिः, मतिः, मम॥

ॐ

## श्री राम-हनुमान संकीर्तन

लोकाभिरामं रणरङ्गधीरं राजीवनेत्रं रघुवंशनाथम्।
कारुण्यरूपं करुणाकरं तं श्रीरामचन्द्रं शरणं प्रपद्ये॥
मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम्।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये॥

ॐ

## माँ के नाम

जय हर मनोरमा जय शिव रानी।
जय दुर्गा जय काली जय मां भवानी॥
जय महाकाली तारा जय मां षोडशी
जय मां भुवनेश्वरी त्रिताप हारिणी॥
भैरवी छिन्नमस्ता धूमावती बगला
मात्तंगी कमला दुर्गति नाशिनी॥ जय ...

## श्री राम भजन

संतो के जीवन ध्रुव तारे,
भक्तों के प्राणों से प्यारे।
विश्व अम्बर सब जग रखवारे,
सब विधि पूरन काम॥ राम...

अजामिल दुःख टारन हारे,
गज गणिका के तारन हारे।
द्रुपद सुता भय वारन हारे,
सुखमय मंगल धाम॥ राम...

अनिल अनल जल रवि शशि तारे,
पृथ्वी गगन गन्ध रस सारे।
तुझ सरिता के सब फव्वारे,
तुम सबके विश्राम॥ राम...

तुम पर धन जन तन मन वारे,
तुझ प्रेमामृत मद मतवारे।
धन्य-धन्य वे जग उजियारे,
जिनके मुख यह नाम। राम...

ॐ

## श्री शिव कीर्तन

ओम् शिव शंकर परात्परा शिव,
ओम् शिव शंकर तव शरणम्।
नमामि शंकर भवानी शंकर,
उमा महेश्वर तव शरणम्।
ओम नमः शिवाय (निम्न स्वर में आठ बार)
ओम नमः शिवाय (उच्च स्वर में आठ बार)

जय शिव शंकर परात्परा शिव,
जय शिव शंकर उमापति।
जय गिरिजा पति जय गंगाधर,
जय भोले कैलासपति
ओम नमः शिवाय (निम्न स्वर में आठ बार)
ओम नमः शिवाय (उच्च स्वर में आठ बार)

ॐ

# हनुमान चालीसा

॥ दोहा ॥

श्रीगुरु चरन सरोज रज निज मनु मुकुरु सुधारि।
बरनऊँ रघुबर बिमल जसु जो दायकु फल चारि॥

बुद्धिहीन तनु जानिके, सुमिरौं पवन-कुमार।
बल बुद्धि बिद्या देहु मोहिं, हरहु कलेस बिकार॥

॥ चौपाई ॥

जय हनुमान ज्ञान गुन सागर।
जय कपीस तिहुँ लोक उजागर॥

राम दूत अतुलित बल धामा।
अंजनि-पुत्र पवनसुत नामा॥

महाबीर बिक्रम बजरंगी।
कुमति निवार सुमति के संगी॥

कंचन बरन बिराज सुबेसा।
कानन कुंडल कुंचित केसा॥

हाथ बज्र औ ध्वजा बिराजै।
काँधे मूँज जनेऊ साजै॥

संकर सुवन केसरीनंदन।
तेज प्रताप महा जग बंदन॥

बिद्यावान गुनी अति चातुर।
राम काज करिबे को आतुर॥

प्रभु चरित्र सुनिबे को रसिया।
राम लखन सीता मन बसिया॥

सूक्ष्म रूप धरि सियहिं दिखावा।
बिकट रूप धरि लंक जरावा॥

भीम रूप धरि असुर सँहारे।
रामचंद्र के काज सँवारे॥

लाय सजीवन लखन जियाये।
श्री रघुबीर हरषि उर लाये॥

रघुपति कीन्ही बहुत बड़ाई।
तुम मम प्रिय भरतहि सम भाई॥

सहस बदन तुम्हरो जस गावैं।
अस कहि श्रीपति कंठ लगावैं॥

सनकादिक ब्रह्मादि मुनीसा।
नारद सारद सहित अहीसा॥

जम कुबेर दिगपाल जहाँ ते।
कबि कोबिद कहि सके कहाँ ते॥

तुम उपकार सुग्रीवहिं कीन्हा।
राम मिलाय राज पद दीन्हा॥

तुम्हरो मंत्र बिभीषन माना ।
लंकेस्वर भए सब जग जाना ॥

जुग सहस्त्र जोजन पर भानू ।
लील्यो ताहि मधुर फल जानू ॥

प्रभु मुद्रिका मेलि मुख माहीं ।
जलधि लाँघि गये अचरज नाहीं ॥

दुर्गम काज जगत के जेते ।
सुगम अनुग्रह तुम्हरे तेते ॥

राम दुआरे तुम रखवारे ।
होत न आज्ञा बिनु पैसारे ॥

सब सुख लहै तुम्हारी सरना ।
तुम रक्षक काहू को डर ना ॥

आपन तेज सम्हारो आपै ।
तीनों लोक हाँक ते काँपै ॥

भूत पिशाच निकट नहिं आवै ।
महावीर जब नाम सुनावै ॥

नासै रोग हरै सब पीरा ।
जपत निरंतर हनुमत बीरा ॥

संकट तें हनुमान छुड़ावै ।
मन क्रम बचन ध्यान जो लावै ॥

सब पर राम तपस्वी राजा ।
तिन के काज सकल तुम साजा ॥

और मनोरथ जो कोइ लावै ।
सोइ अमित जीवन फल पावै ॥

चारों जुग परताप तुम्हारा ।
है परसिद्ध जगत उजियारा ॥

साधु संत के तुम रखवारे ।
असुर निकंदन राम दुलारे ॥

अष्ट सिद्धि नौ निधि के दाता ।
अस बर दीन जानकी माता ॥

राम रसायन तुम्हरे पासा ।
सदा रहो रघुपति के दासा ॥

तुम्हरे भजन राम को पावै ।
जनम जनम के दुख बिसरावै ॥

अंत काल रघुबर पुर जाई ।
जहाँ जन्म हरि-भक्त कहाई ॥

और देवता चित्त न धरई ।
हनुमत सेइ सर्ब सुख करई ॥

संकट कटै मिटै सब पीरा ।
जो सुमिरै हनुमत बलबीरा ॥

जै जै जै हनुमान गौसाईं ।
कृपा करहु गुरु देव की नाईं ॥

जो सत बार पाठ कर कोई ।
छूटहि बंदि महा सुख होई ॥

जो यह पढ़ै हनुमान चालीसा ।
होय सिद्धि साखी गौरीसा ॥

तुलसीदास सदा हरि चेरा ।
कीजै नाथ हृदय महँ डेरा ॥

॥ दोहा ॥

पवनतनय संकट हरन, मंगल मूरति रूप ।
राम लखन सीता सहित, हृदय बसहु सुर भूप ॥

# श्री राधा-कृपाकटाक्ष स्तवराज

मुनीन्द्र-वृन्द वन्दिते त्रिलोक-शोक-हारिणि
प्रसन्न वक्त्र-पङ्कजे निकुञ्ज-भू-विलासिनि।
व्रजेन्द्र-भानु-नन्दिनि व्रजेन्द्र-सूनु-संगते
कदा करिष्यसीह माम् कृपाकटाक्षभाजनम् ॥1॥

अशोक-वृक्ष-वल्लरी-वितान-मण्डप-स्थिते
प्रवाल-बाल पल्लव-प्रभारूणांध्रि-कोमले।
वराभय स्फुरत्-करे प्रभूत-सम्पदालये
कदा करिष्यसीह माम् कृपाकटाक्षभाजनम् ॥2॥

अनङ्ग-रङ्ग-मंगल-प्रसङ्ग-भङ्गुरभ्रुवोः
सविभ्रमै ससम्भ्रमं दृगन्त-बाण-पातनैः।
निरन्तरं वशीकृत-प्रतीत-नन्दनन्दने
कदा करिष्यसीह माम् कृपाकटाक्षभाजनम् ॥3॥

तडित-सुवर्ण-चम्पक-प्रदीप्त-गौर-विग्रहे
मुख-प्रभा-परास्त-कोटि-शारदेन्दुमण्डले।
विचित्र-चित्र-संचरच्चकोर-शाव-लोचने
कदा करिष्यसीह माम् कृपाकटाक्षभाजनम् ॥4॥

मदोन्मदातियौवने प्रमोद-मान-मण्डिते
प्रियानुराग-रञ्जिते कला-विलास-पण्डिते।
अनन्य-धन्य-कुञ्ज राज्य-काम-केलि-कोविदे
कदा करिष्यसीह माम् कृपाकटाक्षभाजनम् ॥5॥

अशेष-हाव-भाव-धीर-हीर-हार-भूषिते
प्रभूतशातकुम्भ-कुम्भ-कुम्भि-कुम्भ-सुस्तनि।
प्रशस्त-मन्द-हास्य-चूर्ण-पूर्ण-सौख्य-सागरे
कदा करिष्यसीह माम् कृपाकटाक्षभाजनम् ॥6॥

मृणाल-बाल-वल्लरी-तरङ्ग-रङ्ग-दोर्लते
लताग्र-लास्य-लोल-नील-लोचनावलोकने।
ललल्ल लुलन् मिलन मनोज्ञ-मुग्ध-मोहनाश्रये
कदा करिष्यसीह माम् कृपाकटाक्षभाजनम् ॥7॥

सुवर्ण-मालिकाञ्चित-त्रिरेख-कम्बु-कण्ठग
त्रिसूत्र-मङ्गलीगुण त्रिरत्न-दीप्त-दीधिते।
सलोल-नीलकुन्तले-प्रसून-गुच्छ-गुम्फिते
कदा करिष्यसीह माम् कृपाकटाक्षभाजनम् ॥8॥

नितम्ब-बिम्ब-लम्बमान-पुष्प-मेखला-गुणे
प्रशस्त-रत्न-किङ्किणी-कलाप-मध्य-मञ्जुले।
करीन्द्र-शुण्ड-दण्डिका-वरोह-सौभगोरुके
कदा करिष्यसीह माम् कृपाकटाक्षभाजनम् ॥9॥

अनेक-मन्त्र नाद-मञ्जु-नूपुरार वस्खलत्-
समाज-राजहंस-वंश-निक्वणातिगौरवे।
विलोल-हेमवल्लरी-विडम्बि-चारू-चङ्क्रमे
कदा करिष्यसीह माम् कृपाकटाक्षभाजनम् ॥10॥

अनन्त-कोटि-विष्णुलोक-नम्र-पद्मजार्चिते
हिमाद्रिजा-पुलोमजा-विरिञ्चजा-वरप्रदे।
अपार-सिद्धि-वृद्धि-दिग्ध-सत्पदाङ्गुली-नखे
कदा करिष्यसीह माम् कृपाकटाक्षभाजनम् ॥11॥

मखेश्वरि क्रियेश्वरि स्वधेश्वरि सुरेश्वरि
त्रिवेद-भारतीश्वरि प्रमाण-शासनेश्वरि।
रमेश्वरि क्षमेश्वरि प्रमोद-काननेश्वरि
ब्रजेश्वरि ब्रजाधिपे श्रीराधिके नमोऽस्तुते ॥12॥

इतीदमद्भुतं स्तवं निशम्य भानुनन्दिनी करोतु संततं जनं कृपाकटाक्ष भाजनम्।
भवेत्तदैव संचित-त्रिरूप-कर्म-नाशनं भवेत्तदा ब्रजेन्द्र-सूनु-मण्डल-प्रवेशनम्॥13॥

# श्री कृष्णाष्टकम्

भजे व्रजैकमण्डनं समस्तपापखण्डनं
स्वभक्तचित्तरञ्जनं सदैव नन्दनन्दनम्।
सुपिच्छगुच्छमस्तकं सुनादवेणुहस्तकं
अनङ्गरङ्गसागरं नमामि कृष्णनागरम् ॥१॥
मनोजगर्वमोचनं विशाललोललोचनं
विधूतगोपशोचनं नमामि पद्मलोचनम्।
करारविन्दभूधरं स्मितावलोकसुन्दरं
महेन्द्रमानदारणं नमामि कृष्णवारणम् ॥२॥
कदम्बसूनकुण्डलं सुचारुगण्डमण्डलं
व्रजाङ्गनैकवल्लभं नमामि कृष्णदुर्लभम्।
यशोदया समोदया सगोपया सनन्दया
युतं सुखैकदायकं नमामि गोपनायकम् ॥३॥
सदैव पादपङ्कजं मदीयमानसे निजं
दधानमुक्तमालकं नमामि नन्दबालकम्।
समस्तदोषशोषणं समस्तलोकपोषणं
समस्तगोपमानसं नमामि नन्दलालसम् ॥४॥
भुवो भरावतारकं भवाब्धिकर्णधारकं
यशोमतीकिशोरकं नमामि चित्तचोरकम्।
दृगन्तकान्तभङ्गिणं सदासदालसङ्गिनं
दिने दिने नवं नवं नमामि नन्दसम्भवम् ॥५॥
गुणाकरं सुखाकरं कृपाकरं कृपाकरं
सुरद्विषन्निकन्दनं नमामि गोपनन्दनम्।
नवीनगोपनागरं नवीनकेलिलम्पटं
नमामि मेघसुन्दरं तडित्प्रभालसत्पटम् ॥६॥
समस्तगोपनन्दनं हृदम्बुजैकमोदनं
नमामि कुञ्जमध्यगं प्रसन्नभानुशोभनम्।
निकामकामदायकं दृगन्तचारुसायकं
रसालवेणुगायकं नमामि कुञ्जनायकम् ॥७॥
विदग्ध-गोपिकामनो-मनोज्ञ-तल्पशायिनं
नमामि कुञ्जकानने प्रवृद्ध-वह्नि-पायिनम्।
किशोरकान्ति रञ्जितं दृगञ्जन सुशोभितं
गजेन्द्र मोक्षकारिणीं नमामि श्री विहारिणम् ॥८॥
यदा तदा यथा तथा तथैव कृष्णसत्कथा
मया सदैव गीयतां तथा कृपा विधीयताम्।
प्रमाणिकाष्टकद्वयं जपत्यधीत्य यः पुमान्
भवेत्स नन्द-नन्दने भवे भवे सुभक्तिमान् ॥९॥

# श्रीगोपाल-सहस्त्रनामस्तोत्रम्

॥श्रीगणेशाय नमः॥

अस्य श्रीगोपालसहस्त्रनामस्तोत्रमन्त्रस्य श्रीनारद ऋषिः, अनुष्टुप् छन्दः, श्रीगोपालो देवता, कामो बीजम्, माया शक्तिः, चन्द्रः कीलकम्, श्रीकृष्णचन्द्रभक्तिरूपफलप्राप्तये श्रीगोपालसहस्त्रनामजपे विनियोगः॥

*अथवा*

ॐ ऐं क्लीं बीजम्, ॐ श्री ह्रीं शक्तिः, श्रीवृन्दावननिवासः कीलकम्, श्रीराधा प्रियं परं ब्रह्मेति मन्त्रः, धर्मादिचतुर्विधपुरुषार्थसिद्ध्यर्थे जपे विनियोगः।

करन्यास

ॐ क्लां अङ्गुष्ठाभ्यां नमः। ॐ क्लीं तर्जनीभ्यां नमः। ॐ क्लूं मध्यमाभ्यां नमः। ॐ क्लैं अनामिकाभ्यां नमः। ॐ क्लौं कनिष्ठिकाभ्यां नमः। ॐ क्लः करतलकरपृष्ठाभ्यां नमः।

हृदयादिन्यास

ॐ क्लां हृदयाय नमः। ॐ क्लीं शिरसे स्वाहा। ॐ क्लूं शिखायै वषट्। ॐ क्लैं कवचाय हुम्। ॐ क्लौं नेत्रत्रयाय वौषट्। ॐ क्लः अस्त्राय फट्।

## अथ ध्यानम्

कस्तूरीतिलकं ललाटपटले वक्षःस्थले कौस्तुभं
नासाग्रे वरमौक्तिकं करतले वेणुं करे कङ्कणम्।
सर्वाङ्गे हरिचन्दनं सुललितं कण्ठे च मुक्तावली
गोपस्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः॥1॥

फुल्लेन्दीवरकान्तिमिन्दुवदनं बर्हावतंसप्रियं
श्रीवत्साङ्कमुदारकौस्तुभधरं पीताम्बरं सुन्दरम्।
गोपीनां नयनोत्पलार्चिततनुं गोगोपसङ्घावृतं
गोविन्दं कलवेणुवादनपरं दिव्याङ्गभूषं भजे॥2॥

## इति ध्यानम्

ॐ क्लीं देवः कामदेवः कामबीजशिरोमणिः।
श्रीगोपालो महीपालः सर्ववेदाङ्गपारगः॥1॥

धरणीपालको धन्यः पुण्डरीकः सनातनः।
गोपतिर्भूपतिः शास्ता प्रहर्ता विश्वतोमुखः॥2॥

आदिकर्ता महाकर्ता महाकालः प्रतापवान्।
जगज्जीवो जगद्धाता जगद्भर्ता जगद्वसुः॥3॥

मत्स्यो भीमः कुहूभर्ता हर्ता वाराहमूर्तिमान्।
नारायणो हृषीकेशो गोविन्दो गरुडध्वजः॥4॥

गोकुलेन्द्रो महाचन्द्रः शर्वरीप्रियकारकः।
कमलामुखलोलाक्षः पुण्डरीकशुभावहः॥5॥

दुर्वासाः कपिलो भौमः सिन्धुसागरसङ्गमः।
गोविन्दो गोपतिर्गोत्रः कालिन्दीप्रेमपूरकः॥6॥

गोपस्वामी गोकुलेन्द्रो गोवर्धनवरप्रदः।
नन्दादिगोकुलत्राता दाता दारिद्र्यभञ्जनः॥7॥

सर्वमङ्गलदाता च सर्वकामप्रदायकः।
आदिकर्ता महीभर्ता सर्वसागरसिन्धुजः॥8॥

गजगामी गजोद्धारी कामी कामकलानिधिः।
कलङ्करहितश्चन्द्रो बिम्बास्यो बिम्बसत्तमः॥9॥

मालाकारः कृपाकारः कोकिलास्वरभूषणः।
रामो नीलाम्बरो देवो हली दुर्दममर्दनः॥10॥

सहस्राक्षपुरीभेत्ता महामारीविनाशनः।
शिवः शिवतमो भेत्ता बलारातिप्रपूजकः॥11॥

कुमारीवरदायी च वरेण्यो मीनकेतनः।
नरो नारायणो धीरो राधापतिरुदारधीः॥12॥

श्रीपतिः श्रीनिधिः श्रीमान् मापतिः प्रतिराजहा।
वृन्दापतिः कुलग्रामी धामी ब्रह्मसनातनः॥13॥

रेवतीरमणो रामाश्चञ्चलश्चारुलोचनः।
रामायणशरीरोऽयं रामी रामः श्रियःपतिः॥14॥

शर्वरः शर्वरी शर्वः सर्वत्र शुभदायकः।
राधाराधयितो राधी राधाचित्तप्रमोदकः॥15॥

राधारतिसुखोपेतो राधामोहनतत्परः।
राधावशीकरो राधाहृदयांभोजषट्पदः॥16॥

राधालिङ्गनसम्मोहो राधानर्तनकौतुकः।
राधासञ्जातसम्प्रीती राधाकामफलप्रदः॥17॥

वृन्दापतिः कोशनिधिः कोकशोकविनाशकः।
चन्द्रापतिश्चन्द्रपतिश्चण्डकोदण्डभञ्जनः॥18॥

रामो दाशरथी रामो भृगुवंशसमुद्भवः।
आत्मारामो जितक्रोधो मोहो मोहान्धभञ्जनः॥19॥

वृषभानुर्भवो भावः काश्यपिः करुणानिधिः।
कोलाहलो हली हाली हेली हलधरप्रियः॥20॥

राधामुखाब्जमार्तण्डो भास्करो रविजो विधुः।
विधिर्विधाता वरुणो वारुणो वारुणीप्रियः॥21॥

रोहिणीहृदयानन्दी वसुदेवात्मजो बली।
नीलाम्बरो रौहिणेयो जरासन्धवधोऽमलः॥22॥

नागो नवाम्भो विरुदो वीरहा वरदो बली।
गोपथो विजयी विद्वान् शिपिविष्टः सनातनः॥23॥

पर्शुरामवचोग्राही वरग्राही शृगालहा।
दमघोषोपदेष्टा च रथग्राही सुदर्शनः॥24॥

वीरपत्नीयशस्त्राता जराव्याधिविघातकः।
द्वारकावासतत्त्वज्ञो हुताशनवरप्रदः॥25॥

यमुनावेगसंहारी नीलाम्बरधरः प्रभुः।
विभुः शरासनो धन्वी गणेशो गणनायकः॥26॥

लक्ष्मणो लक्षणो लक्ष्यो रक्षोवंशविनाशनः।
वामनो वामनीभूतो वमनो वमनारुहः॥27॥

यशोदानन्दनः कर्ता यमलार्जुनमुक्तिदः
उलूखली महामानी दामबद्धाह्वयी शमी॥28॥

भक्तानुकारी भगवान् केशवोऽचलधारकः।
केशिहा मधुहा मोही वृषासुरविघातकः॥29॥

अघासुरविनाशी च पूतनामोक्षदायकः।
कुब्जाविनोदी भगवान् कंसमृत्युर्महामखी॥30॥

अश्वमेधो वाजपेयो गोमेधो नरमेधवान्।
कन्दर्पकोटिलावण्यश्चन्द्रकोटिसुशीतलः॥31॥

रविकोटिप्रतीकाशो वायुकोटिमहाबलः।
ब्रह्मा ब्रह्माण्डकर्ता च कमलावाञ्छितप्रदः॥32॥

कमला कमलाक्षश्च कमलामुखलोलुपः।
कमलाव्रतधारी च कमलाभः पुरन्दरः॥33॥

सौभाग्याधिकचित्तोऽयं महामायी महोत्कटः।
तारकारिः सुरत्राता मारीचक्षोभकारकः॥34॥

विश्वामित्रप्रियो दान्तो रामो राजीवलोचनः।
लङ्काधिपकुलध्वंसी विभिषणवरप्रदः।।35।।

सीतानन्दकरो रामो वीरो वारिधिबन्धनः।
खरदूषणसंहारी साकेतपुरवासनः।।36।।

चन्द्रावलीपतिः कूलः केशी कंसवधोऽमरः।
माधवी मधुहा माध्वी माध्वीको माधवो मधुः।।37।।

मुञ्जाटवीगाहमानो धेनुकारिर्धरात्मजः।
वंशीवटविहारी च गोवर्धनवनाश्रयः।।38।।

तथा तालवनोद्देशी भाण्डीरवनशङ्खहा।
तृणावर्तकथाकारी वृषभानुसुतापतिः।।39।।

राधाप्राणसमो राधावदनाब्जमधुव्रतः।
गोपीरञ्जनदैवज्ञो लीलाकमलपूजितः।।40।।

क्रीडाकमलसन्दोहो गोपिकाप्रीतिरञ्जनः।
रञ्जको रञ्जनो रङ्गो रङ्गी रङ्गमहीरुहः।।41।।

कामः कामारिभक्तोऽयं पुराणपुरुषः कविः।
नारदो देवलो भीमो बालो बालमुखाम्बुजः।।42।।

अम्बुजो ब्रह्मसाक्षी च योगी दत्तवरो मुनिः।
ऋषभः पर्वतो ग्रामो नदीपवनवल्लभः।।43।।

पद्मनाभः सुरज्येष्ठो ब्रह्मा रुद्रोऽहिभूषितः।
गणानां त्राणकर्ता च गणेशो ग्रहिलो ग्रही।।44।।

गणाश्रयो गणाध्यक्षः क्रोडीकृतजगत्त्रयः।
यादवेन्द्रो द्वारकेन्द्रो मथुरावल्लभो धुरी।।45।।

भ्रमरः कुन्तली कुन्तीसुतरक्षी महामखी।
यमुनावरदाता च काश्यपस्य वरप्रदः।।46।।

शङ्खचूडवधोद्दामो गोपीरक्षणतत्परः।
पाञ्चजन्यकरो रामी त्रिरामी वनजो जयः।।47।।

फाल्गुनः फाल्गुनसखो विराधवधकारकः।
रुक्मिणीप्राणनाथश्च सत्यभामाप्रियङ्करः।।48।।

कल्पवृक्षो महावृक्षो दानवृक्षो महाफलः।
अंकुशो भूसुरो भामो भामको भ्रामको हरिः।।49।।

सरलः शाश्वतो वीरो यदुवंशी शिवात्मकः।
प्रद्युम्नो बलकर्ता च प्रहर्ता दैत्यहा प्रभुः।।50।।

महाधनो महावीरो वनमालाविभूषणः।
तुलसीदामशोभाढ्यो जालन्धरविनाशनः।।51।।

शूरः सूर्यो मृकण्डश्च भास्करो विश्वपूजितः।
रविस्तमोहा वह्निश्च वाडवो वडवानलः।।52।।

दैत्यदर्पविनाशी च गरुडो गरुडाग्रजः।
गोपीनाथो महीनाथो वृन्दानाथोऽवरोधकः।।53।।

प्रपञ्ची पञ्चरूपश्च लतागुल्मश्च गोपतिः।
गङ्गा च यमुनारूपो गोदा वेत्रवती तथा।।54।।

कावेरी नर्मदा तापी गण्डकी सरयूस्तथा।
राजसस्तामसः सत्त्वी सर्वाङ्गी सर्वलोचनः।।55।।

सुधामयोऽमृतमयो योगिनीवल्लभः शिवः।
बुद्धो बुद्धिमतां श्रेष्ठो विष्णुर्जिष्णुः शचीपतिः।।56।।

वंशी वंशधरो लोको विलोको मोहनाशनः।
रवरावो रवो रावो बालो बालबलाहकः।।57।।

शिवो रुद्रो नलो नीलो लाङ्गली लाङ्गलाश्रयः।
पारदः पावनो हंसो हंसारूढो जगत्पतिः।।58।।

मोहिनीमोहनो मायी महामायो महामखी।
वृषो वृषाकपिः कालः कालीदमनकारकः।।59।।

कुब्जाभाग्यप्रदो वीरो रजकक्षयकारकः।
कोमलो वारुणो राजा जलजो जलधारकः।।60।।

हारकः सर्वपापघ्नः परमेष्ठी पितामहः।
खड्गधारी कृपाकारी राधारमणसुन्दरः।।61।।

द्वादशारण्यसम्भोगी शेषनागफणालयः।
कामः श्यामः सुखः श्रीदः श्रीपतिः श्रीनिधिः कृतिः।।62।।

हरिर्हरो नरो नारो नरोत्तम इषुप्रियः।
गोपालीचित्तहर्ता च कर्ता संसारतारकः॥63॥

आदिदेवो महादेवो गौरीगुरुरनाश्रयः।
साधुर्मधुर्विधुर्धाता भ्राता क्रूरपरायणः॥64॥

रोलम्बी च हयग्रीवो वानरारिर्वनाश्रयः।
वनं वनी वनाध्यक्षो महावन्द्यो महामुनिः॥65॥

स्यमन्तकमणिप्राज्ञो विज्ञो विघ्नविघातकः।
गोवर्धनो वर्धनीयो वर्धनी वर्धनप्रियः॥66॥

वर्धन्यो वर्धनो वर्धी वार्धिन्यः सुमुखप्रियः।
वर्धितो वृद्धको वृद्धो वृन्दारकजनप्रियः॥67॥

गोपालरमणीभर्ता साम्बकुष्ठविनाशनः।
रुक्मिणीहरणः प्रेम प्रेमी चन्द्रावलीपतिः॥68॥

श्रीकर्ता विश्वभर्ता च नरो नारायणो बली।
गणो गणपतिश्चैव दत्तात्रेयो महामुनिः॥69॥

व्यासो नारायणो दिव्यो भव्यो भावुकधारकः।
स्वः श्रेयसं शिवं भद्रं भावुकं भविकं शुभम्॥70॥

शुभात्मकः शुभः शास्ता प्रशास्ता मेघनादहा।
ब्रह्मण्यदेवो दीनानामुद्धारकरणक्षमः॥71॥

कृष्णः कमलपत्राक्षः कृष्णः कमललोचनः।
कृष्णः कामी सदाकृष्णः समस्तप्रियकारकः॥72॥

नन्दो नन्दी महानन्दी मादी मादनकः किली।
मिली हिली गिली गोली गोलो गोलालयो गुली॥73॥

गुग्गुली मारकी शाखी वटः पिप्पलकः कृती।
म्लेच्छहा कालहर्ता च यशोदायश एव च॥74॥

अच्युतः केशवो विष्णुर्हरिः सत्यो जनार्दनः।
हंसो नारायणो लीलो नीलो भक्तिपरायणः॥75॥

जानकीवल्लभो रामो विरामो विघ्ननाशनः।
सहस्रांशुर्महाभानुर्वीरबाहुर्महोदधिः॥76॥

समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः।
गोकुलानन्दकारी च प्रतिज्ञापरिपालकः॥77॥

सदारामः कृपारामो महारामो धनुर्धरः।
पर्वतः पर्वताकारो गयो गेयो द्विजप्रियः॥78॥

कम्बलाश्वतरो रामो रामायणप्रवर्तकः।
द्यौर्दिवो दिवसो दिव्यो भव्यो भाविभयापहः॥79॥

पार्वतीभाग्यसहितो भ्राता लक्ष्मीविलासवान्।
विलासी साहसी सर्वी गर्वी गर्वितलोचनः॥80॥

मुरारिर्लोकधर्मज्ञो जीवनो जीवनान्तकः।
यमो यमादिर्यमनो यामी यामविधायकः॥81॥

वंसुली पांसुली पांसुः पाण्डुरर्जुनवल्लभः।
ललिताचन्द्रिकामाली माली मालाम्बुजाश्रयः॥82॥

अम्बुजाक्षो महायक्षो दक्षश्चिन्तामणिः प्रभुः।
मणिर्दिनमणिश्चैव केदारो बदराश्रयः॥83॥

बदरीवनसम्प्रीतो व्यासः सत्यवतीसुतः।
अमरारिनिहन्ता च सुधासिन्धुर्विधूदयः॥84॥

चन्द्रो रविः शिवः शूली चक्री चैव गदाधरः।
श्रीकर्ता श्रीपतिः श्रीदः श्रीदेवो देवकीसुतः॥85॥

श्रीपतिः पुण्डरीकाक्षः पद्मनाभो जगत्पतिः।
वासुदेवोऽप्रमेयात्मा केशवो गरुडध्वजः॥86॥

नारायणः परं धाम देवदेवो महेश्वरः।
चक्रपाणिः कलापूर्णो वेदवेद्यो दयानिधिः॥87॥

भगवान्सर्वभूतेशो गोपालः सर्वपालकः।
अनन्तो निर्गुणोऽनन्तो निर्विकल्पो निरञ्जनः॥88॥

निराधारो निराकारो निराभासो निराश्रयः।
पुरुषः प्रणवातीतो मुकुन्दः परमेश्वरः॥89॥

क्षणावनिः सार्वभौमो वैकुण्ठो भक्तवत्सलः।
विष्णुर्दामोदरः कृष्णो माधवो मथुरापतिः॥90॥

देवकीगर्भसम्भूतो यशोदावत्सलो हरिः।
शिवः सङ्कर्षणः शम्भुर्भूतनाथो दिवस्पतिः॥91॥

अव्ययः सर्वधर्मज्ञो निर्मलो निरुपद्रवः।
निर्वाणनायको नित्यो नीलजीमूतसंनिभः॥92॥

कालाक्षयश्च सर्वज्ञः कमलारूपतत्परः।
हृषीकेशः पीतवासो वसुदेवप्रियात्मजः॥93॥

नन्दगोपकुमारार्यो नवनीताशनः प्रभुः।
पुराणपुरुषः श्रेष्ठः शङ्खपाणिः सुविक्रमः॥94॥

अनिरुद्धश्चक्ररथः शार्ङ्गपाणिश्चतुर्भुजः।
गदाधरः सुरार्तिघ्नो गोविन्दो नन्दकायुधः॥95॥

वृन्दावनचरः शौरिर्वेणुवाद्यविशारदः।
तृणावर्तान्तको भीमो साहसो बहुविक्रमः॥96॥

सकटासुरसंहारी बकासुरविनाशनः।
धेनुकासुरसङ्घातः पूतनारिर्नृकेसरी॥97॥

पितामहो गुरुः साक्षी प्रत्यगात्मा सदाशिवः।
अप्रमेयः प्रभुः प्राज्ञोऽप्रतर्क्यः स्वप्नवर्धनः॥98॥

धन्यो मान्यो भवो भावो धीरः शान्तो जगद्गुरुः।
अन्तर्यामीश्वरो दिव्यो दैवज्ञो देवतागुरुः॥99॥

क्षीराब्धिशयनो धाता लक्ष्मीवाँल्लक्ष्मणाग्रजः।
धात्रीपतिरमेयात्मा चन्द्रशेखरपूजितः॥100॥

लोकसाक्षी जगच्चक्षुः पुण्यचारित्रकीर्तनः।
कोटिमन्मथसौन्दर्यो जगन्मोहनविग्रहः॥101॥

मन्दस्मिततमो गोपो गोपिकापरिवेष्टितः।
फुल्लारविन्दनयनश्चाणूरान्ध्रनिषूदनः॥102॥

इन्दीवरदलश्यामो बर्हिबर्हावतंसकः।
मुरलीनिनदाह्लादो दिव्यमाल्याम्बराश्रयः॥103॥

सुकपोलयुगः सुभ्रूयुगलः सुललाटकः।
कम्बुग्रीवो विशालाक्षो लक्ष्मीवान् शुभलक्षणः॥104॥

पीनवक्षाश्चतुर्बाहुश्चतुर्मूर्तीस्त्रिविक्रमः।
कलङ्करहितः शुद्धो दुष्टशत्रुनिबर्हणः॥105॥

किरीटकुण्डलधरः कटकाङ्गदमण्डितः।
मुद्रिकाभरणोपेतः कटिसूत्रविराजितः॥106॥

मञ्जीररञ्जितपदः सर्वाभरणभूषितः।
विन्यस्तपादयुगलो दिव्यमङ्गलविग्रहः॥107॥

गोपिकानयनानन्दः पूर्णचन्द्रनिभाननः।
समस्तजगदानन्दः सुन्दरो लोकनन्दनः॥108॥

यमुनातीरसञ्चारी राधामन्मथवैभवः।
गोपनारीप्रियो दान्तो गोपिवस्त्रापहारकः॥109॥

शृङ्गारमूर्तिः श्रीधामा तारको मूलकारणम्।
सृष्टिसंरक्षणोपायः क्रूरासुरविभञ्जनः॥110॥

नरकासुरहारी च मुरारिर्वैरिमर्दनः।
आदितेयप्रियो दैत्यभीकरश्चेन्दुशेखरः॥111॥

जरासन्धकुलध्वंसी कंसारातिः सुविक्रमः।
पुण्यश्लोकः कीर्तनीयो यादवेन्द्रो जगन्नुतः॥112॥

रुक्मिणीरमणः सत्यभामाजाम्बवतीप्रियः।
मित्रविन्दानाग्नजितीलक्ष्मणासमुपासितः॥113॥

सुधाकरकुले जातोऽनन्तप्रबलविक्रमः।
सर्वसौभाग्यसम्पन्नो द्वारकायामुपस्थितः॥114॥

भद्रासूर्यसुतानाथो लीलामानुषविग्रहः।
सहस्रषोडशस्त्रीशो भोगमोक्षैकदायकः॥115॥

वेदान्तवेद्यः संवेद्यो वैद्यो ब्रह्माण्डनायकः।
गोवर्धनधरो नाथः सर्वजीवदयापरः॥116॥

मूर्तिमान्सर्वभूतात्मा आर्तत्राणपरायणः।
सर्वज्ञः सर्वसुलभः सर्वशास्त्रविशारदः॥117॥

षड्गुणैश्वर्यसम्पन्नः पूर्णकामो धुरन्धरः।
महानुभावः कैवल्यदायको लोकनायकः॥118॥

आदिमध्यान्तरहितः शुद्धसात्त्विकविग्रहः।
असमानः समस्तात्मा शरणागतवत्सलः॥119॥

उत्पत्तिस्थितिसंहारकारणं सर्वकारणम्।
गम्भीरः सर्वभावज्ञः सच्चिदानन्दविग्रहः॥120॥

विष्वक्सेनः सत्यसंधः सत्यवान्सत्यविक्रमः।
सत्यव्रतः सत्यसंज्ञः सर्वधर्मपरायणः॥121॥

आपन्नार्तिप्रशमनो द्रौपदीमानरक्षकः।
कन्दर्पजनकः प्राज्ञो जगन्नाटकवैभवः॥122॥

भक्तिवश्यो गुणातीतः सर्वैश्वर्यप्रदायकः।
दमघोषसुतद्वेषी बाणबाहुविखण्डनः॥123॥

भीष्मभक्तिप्रदो दिव्यः कौरवान्वयनाशनः।
कौन्तेयप्रियबन्धुश्च पार्थस्यन्दनसारथिः॥124॥

नारसिंहो महावीरः स्तम्भजातो महाबलः।
प्रह्लादवरदः सत्यो देवपूज्योऽभयङ्करः॥125॥

उपेन्द्र इन्द्रावरजो वामनो बलिबन्धनः।
गजेन्द्रवरदः स्वामी सर्वदेवनमस्कृतः॥126॥

शेषपर्यङ्कशयनो वैनतेयरथो जयी।
अव्याहतबलैश्वर्यसम्पन्नः पूर्णमानसः॥127॥

योगेश्वरेश्वरः साक्षी क्षेत्रज्ञो ज्ञानदायकः।
योगिहृत्पङ्कजावासो योगमायासमन्वितः॥128॥

नादबिन्दुकलातीतश्चतुर्वर्गफलप्रदः।
सुषुम्णामार्गसञ्चारी देहस्यान्तरसंस्थितः॥129॥

देहेन्द्रियमनःप्राणसाक्षी चेतःप्रसादकः।
सूक्ष्मः सर्वगतो देही ज्ञानदर्पणगोचरः॥130॥

तत्त्वत्रयात्मकोऽव्यक्तः कुण्डलीसमुपाश्रितः।
ब्रह्मण्यः सर्वधर्मज्ञः शान्तो दान्तो गतक्लमः॥131॥

श्रीनिवासः सदानन्दो विश्वमूर्तिर्महाप्रभुः।
सहस्त्रशीर्षा पुरुषः सहस्त्राक्षः सहस्त्रपात्॥132॥

समस्तभुवनाधारः समस्तप्राणरक्षकः।
समस्तसर्वभावज्ञो गोपिकाप्राणवल्लभः॥133॥

नित्योत्सवो नित्यसौख्यो नित्यश्रीर्नित्यमङ्गलः।
व्यूहार्चितो जगन्नाथः श्रीवैकुण्ठपुराधिपः॥134॥

पूर्णानन्दघनीभूतो गोपवेषधरो हरिः।
कलापकुसुमश्यामः कोमलः शान्तविग्रहः॥135॥

गोपाङ्गनावृतोऽनन्तो वृन्दावनसमाश्रयः।
वेणुवादरतः श्रेष्ठो देवानां हितकारकः॥136॥

बालक्रीडासमासक्तो नवनीतस्य तस्करः।
गोपालकामिनीजारश्चोरजारशिखामणिः॥137॥

परं ज्योतिः पराकाशः परावासः परिस्फुटः।
अष्टादशाक्षरो मन्त्रो व्यापको लोकपावनः॥138॥

सप्तकोटिमहामन्त्रशेखरो देवशेखरः।
विज्ञानज्ञानसन्धानस्तेजोराशिर्जगत्पतिः॥139॥

भक्तलोकप्रसन्नात्मा भक्तमन्दारविग्रहः।
भक्तदारिद्र्यदमनो भक्तानां प्रीतिदायकः॥140॥

भक्ताधीनमनाः पूज्यो भक्तलोकशिवङ्करः।
भक्ताभीष्टप्रदः सर्वभक्ताघौघनिकृन्तनः॥141॥

अपारकरुणासिन्धुर्भगवान्भक्ततत्परः॥142॥

*इति सम्मोहनतन्त्रे पार्वतीश्वरसंवादे*
*श्रीगोपालसहस्त्रनामस्तोत्रं सम्पूर्णम्।*

## माहात्म्यम्

इति श्रीराधिकानाथसहस्त्रं नामकीर्तनम्।
स्मरणात्पापराशीनां खण्डनं मृत्युनाशनम्॥143॥

वैष्णवानां प्रियकरं महारोगनिवारणम्।
ब्रह्महत्या सुरापानं परस्त्रीगमनं तथा॥144॥

परद्रव्यापहरणं परद्वेषसमन्वितम्।
मानसं वाचिकं कायं यत्पापं पापसम्भवम्॥145॥

सहस्त्रनामपठनात्सर्वं नश्यति तत्क्षणात्।
महादारिद्र्ययुक्तो यो वैष्णवो विष्णुभक्तिमान्॥146॥

कार्तिक्यां सम्पठेद्रात्रौ शतमष्टोत्तरं क्रमात्।
पीताम्बरधरो धीमान्सुगन्धिपुष्पचन्दनैः॥147॥

पुस्तकं पूजयित्वा तु नैवेद्यादिभिरेव च।
राधाध्यानाङ्कितो धीरो वनमालाविभूषितः॥148॥

शतमष्टोत्तरं देवि पठेन्नामसहस्त्रकम्।
चैत्रशुक्ले च कृष्णे च कुहूसंक्रान्तिवासरे॥149॥

पठितव्यं प्रयत्नेन त्रैलोक्यं मोहयेत्क्षणात्।
तुलसीमालया युक्तो वैष्णवो भक्तितत्परः॥150॥

रविवारे च शुक्रे च द्वादश्यां श्राद्धवासरे।
ब्राह्मणं पूजयित्वा च भोजयित्वा विधानतः॥151॥

पठेन्नामसहस्त्रं च ततः सिद्धिः प्रजायते।
महानिशायां सततं वैष्णवो यः पठेत्सदा॥152॥

देशान्तरगता लक्ष्मीः समायातिं न संशयः।
त्रैलोक्ये च महादेवि सुन्दर्यः काममोहिताः॥153॥

मुग्धाः स्वयं समायान्ति वैष्णवं च भजन्ति ताः।
रोगी रोगात्प्रमुच्येत बद्धो मुच्येत बन्धनात्॥154॥

गुर्विणी जनयेत्पुत्रं कन्या विन्दति सत्पतिम्।
राजानो वश्यतां यान्ति किं पुनः क्षुद्रमानवाः॥155॥

सहस्त्रनामश्रवणात्पठनात्पूजनात्प्रिये।
धारणात्सर्वमाप्नोति वैष्णवो नात्र संशयः॥156॥

वंशीतटे चान्यवटे तथा पिप्पलकेऽथवा।
कदम्बपादपतले गोपालमूर्तिसन्निधौ॥157॥

यः पठेद्वैष्णवो नित्यं स याति हरिमन्दिरम्।
कृष्णेनोक्तं राधिकायै मयि प्रोक्तं पुरा शिवे॥158॥

नारदाय मया प्रोक्तं नारदेन प्रकाशितम्।
मया त्वयि वरारोहे प्रोक्तमेतत्सुदुर्लभम्॥159॥

गोपनीयं प्रयत्नेन न प्रकाश्यं कथञ्चन।
शठाय पापिने चैव लम्पटाय विशेषतः॥160॥

न दातव्यं न दातव्यं न दात्व्यं कदाचन।
देयं शिष्याय शान्ताय विष्णुभक्तिरताय च॥161॥

गोदानब्रह्मयज्ञादेर्वाजपेयशतस्य च।
अश्वमेधसहस्त्रस्य फलं पाठे भवेद् ध्रुवम्॥162॥

मोहनं स्तम्भनं चैव मारणोच्चाटनादिकम्।
यद्यद्वाञ्छति चित्तेन तत्तत्प्राप्नोति वैष्णवः॥163॥

एकादश्यां नरः स्नात्वा सुगन्धिद्रव्यतैलकैः।
आहारं ब्राह्मणे दत्त्वा दक्षिणां स्वर्णभूषणम्॥164॥

तत आरम्भकर्ताऽस्मात् सर्वं प्राप्नोति मानवः।
शतावृत्तं सहस्त्रं च यः पठेद्वैष्णवो जनः॥165॥

श्रीवृन्दावनचन्द्रस्य प्रासादात्सर्वमाप्नुयात्।
यद्गृहे पुस्तकं देवि पूजितं चैव तिष्ठति॥166॥

न मारी न च दुर्भिक्षं नोपसर्गभयं क्वचित्।
सर्पादिभूतयक्षाद्या नश्यन्ति नात्र संशयः॥167॥

श्रीगोपालो महादेवि वसेत्तस्य गृहे सदा।
गृहे यत्र सहस्त्रं च नाम्नां तिष्ठति पूजितम्॥168॥

*इति सम्मोहनतन्त्रे पार्वतीश्वरसंवादे*
*श्रीगोपालसहस्त्रनामस्तोत्रस्य माहात्म्यं सम्पूर्णम्।*

गोवर्धन धराधार गोकुलत्राणकारक। विष्णुबाहुकृतोच्छ्राय गवां कोटिप्रदो भव॥
या लक्ष्मीर्लोकपालानां धेनुरूपेण संस्थिता। धृतं वहति यज्ञार्थे मम पापं व्यपोहतु॥
अग्रतः सन्तु मे गावो गावो मे सन्तु पृष्ठतः। गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम्॥

'पृथ्वी को धारण करने वाले गोवर्धन! आप गोकुल के रक्षक हैं। भगवान् श्रीकृष्ण ने आपको अपनी भुजाओं पर उठाया था। आप मुझे कोटि-कोटि गौएँ प्रदान करें। लोकपालों की जो लक्ष्मी धेनुरूप में स्थित है और यज्ञ के लिये घृत प्रदान करती है, वह मेरे पाप को दूर करे। मेरे आगे गौएँ रहें, मेरे हृदय में गौओं का निवास हो तथा मैं भी गौओं के बीच में निवास करूँ।'............................................................पद्मपुराण - 124; 31 - 33

# अथ श्रीविष्णुसहस्त्रनामस्तोत्रम्

ध्यानम्

**शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं**
**विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम्।**
**लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं**
**वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम्॥**

श्री विष्णुसहस्त्रनाम प्रारम्भ

**ॐ विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः। भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः॥1॥**

ॐ विश्वम् विष्णुः वषट्कारः, भूतभव्यभवत्प्रभुः। भूतकृत् भूतभृत् भावः, भूतात्मा भूतभावनः॥

**पूतात्मा परमात्मा च मुक्तानां परमा गतिः। अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च॥2॥**

पूतात्मा परमात्मा च, मुक्तानां परमा गतिः। अव्ययः पुरुषः साक्षी, क्षेत्रज्ञः अक्षरः एव च॥

**योगो योगविदां नेता प्रधानपुरुषेश्वरः। नारसिंहवपुः श्रीमान्केशवः पुरुषोत्तमः॥3॥**

योगः योगविदां नेता, प्रधानपुरुषेश्वरः। नारसिंहवपुः श्रीमान, केशवः पुरुषोत्तमः॥

**सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः। सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः॥4॥**

सर्वः शर्वः शिवः स्थाणः, भूतादिः निधिरव्ययः। सम्भवः भावनः भर्ता, प्रभवः प्रभुः ईश्वरः॥

**स्वयम्भूः शम्भुरादित्यः पुष्कराक्षो महास्वनः। अनादिनिधनो धाता विधाता धातुरुत्तमः॥5॥**

स्वयम्भूः शम्भुः आदित्यः, पुष्कराक्षः महास्वनः। अनादिनिधनः धाता, विधाता धातुरुत्तमः॥

**अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः। विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः॥6॥**

अप्रमेयः हृषीकेशः, पद्मनाभः अमरप्रभुः। विश्वकर्मा मनुः त्वष्टा, स्थविष्ठः स्थविरो ध्रुवः॥

**अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः। प्रभूत-स्त्रिककुब्धाम पवित्रं मंगलं परम्॥7॥**

अग्राह्यः शाश्वतः कृष्णः, लोहिताक्षः प्रतर्दनः। प्रभूतः त्रिककुब्धाम, पवित्रम् मंगलं परम्॥

**ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः। हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः॥8॥**

ईशानः प्राणदः प्राणः, ज्येष्ठः श्रेष्ठः प्रजापतिः। हिरण्यगर्भः भूगर्भः, माधवः मधुसूदनः॥

**ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः। अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान्॥9॥**

ईश्वरः विक्रमी धन्वी, मेधावी विक्रमः क्रमः। अनुत्तमः दुराधर्षः, कृतज्ञः कृतिः आत्मवान्॥

**सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः। अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः॥10॥**

सुरेशः शरणम् शर्म, विश्वरेताः प्रजाभवः। अहः संवत्सरः व्यालः, प्रत्ययः सर्वदर्शनः॥

**अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः। वृषाकपिरमेयात्मा सर्वयोगविनिः सृतः॥11॥**
अजः सर्वेश्वरः सिद्धः, सिद्धिः सर्वादिः अच्युतः। वृषाकपिः अमेयात्मा, सर्वयोगविनिः सृतः॥

**वसुर्वसुमनाः सत्यः समात्मासम्मितः समः। अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः॥12॥**
वसुः वसुमनाः सत्यः, समात्मा असम्मितः समः। अमोघः पुण्डरीकाक्षः, वृषकर्मा वृषाकृतिः॥

**रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः। अमृतः शाश्वतः स्थाणुर्वरारोहो महातपाः॥13॥**
रुद्रः बहुशिराः बभ्रुः, विश्वयोनिः शुचिश्रवाः। अमृतः शाश्वतस्थाणुः, वरारोहः महातपाः॥

**सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः। वेदो वेदविदव्यंगो वेदाङ्गो वेदवित्कविः॥14॥**
सर्वगः सर्वविद्भानुः, विष्वक्सेनः जनार्दनः। वेदः वेदवित् अव्यङ्गः, वेदाङ्गः वेदवित् कविः॥

**लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः। चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः॥15॥**
लोकाध्यक्षः सुराध्यक्षः, धर्माध्यक्षः कृताकृतः। चतुरात्मा चतुर्व्यूहः, चतुर्दंष्ट्रः चतुर्भुजः॥

**भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः। अनघो विजयो जेता विश्वयोनिः पुनर्वसुः॥16॥**
भ्राजिष्णुः भोजनम् भोक्ता, सहिष्णुः जगदादिजः। अनघः विजयः जेता, विश्वयोनिः पुनर्वसुः॥

**उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः। अतीन्द्रः संग्रहः सर्गो धृतात्मा नियमो यमः॥17॥**
उपेन्द्रः वामनः प्रांशुः, अमोघः शुचिः ऊर्जितः। अतीन्द्रः संग्रहः सर्गः, धृतात्मा नियमः यमः॥

**वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः। अतीन्द्रियो महामायो महोत्साहो महाबलः॥18॥**
वेद्यः वैद्यः सदायोगी, वीरहा माधवः मधुः। अतीन्द्रियः महामायः, महोत्साहः महाबलः॥

**महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः। अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक्॥19॥**
महाबुद्धिः महावीर्याः, महाशक्तिः महाद्युतिः। अनिर्देश्यवपुः श्रीमान्, अमेयात्मा महाद्रिधृक्॥

**महेष्वासो महीभर्ता श्रीनिवासः सतां गतिः। अनिरुद्धः सुरानन्दो गोविन्दो गोविदां पतिः॥20॥**
महेष्वासः महीभर्ता, श्रीनिवासः सतां गतिः। अनिरुद्धः सुरानन्दः, गोविन्दः गोविदां पतिः॥

**मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः। हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः॥21॥**
मरीचिः दमनः हंसः, सुपर्णः भुजगोत्तमः। हिरण्यनाभः सुतपाः, पद्मनाभः प्रजापतिः॥

**अमृत्युः सर्वदृक् सिंहः सन्धाता सन्धिमान्स्थिरः। अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा॥22॥**
अमृत्युः सर्वदृक् सिंहः, सन्धाता संधिमान् स्थिरः। अजः दुर्मर्षणः शास्ता, विश्रुतात्मा सुरारिहा॥

**गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः। निमिषोऽनिमिषः स्त्रग्वी वाचस्पतिरुदारधीः॥23॥**
गुरुः गुरुतमः धाम, सत्यः सत्यपराक्रमः। निमिषः अनिमिषः स्त्रग्वी, वाचस्पतिरुदारधीः॥

**अग्रणीर्ग्रामणीः श्रीमान्न्यायो नेता समीरणः। सहस्त्रमूर्धा विश्वात्मा सहस्त्राक्षः सहस्त्रपात्॥24॥**
अग्रणीः ग्रामणीः श्रीमान्, न्यायः नेता समीरणः। सहस्त्रमूर्धा विश्वात्मा, सहस्त्राक्षः सहस्त्रपात्॥

**आवर्तनो निवृत्तात्मा संवृतः सम्प्रमर्दनः। अहः संवर्तको वह्निरनिलो धरणीधरः॥25॥**
आवर्तनः निवृत्तात्मा, संवृतः सम्प्रमर्दनः। अहः संवर्तकः वह्निः, अनिलः धरणीधरः॥

**सुप्रसादः प्रसन्नात्मा विश्वधृग्विश्वभुग्विभुः। सत्कर्ता सत्कृतः साधुर्जह्नुर्नारायणो नरः॥26॥**

सुप्रसादः प्रसन्नात्मा, विश्वधृक् विश्वभुक् विभुः। सत्कर्ता सत्कृतः साधुः, जह्नुः नारायणः नरः॥

**असंख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः। सिद्धार्थः सिद्धसंकल्पः सिद्धिदः सिद्धिसाधनः॥27॥**

असंख्येयः अप्रमेयात्मा, विशिष्टः शिष्टकृत् शुचिः। सिद्धार्थः सिद्धसंकल्पः, सिद्धिदः सिद्धिसाधनः॥

**वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः। वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः॥28॥**

वृषाही वृषभः विष्णुः, वृषपर्वा वृषोदरः। वर्धनः वर्धमानः, विविक्तः श्रुतिसागरः॥

**सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः। नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः॥29॥**

सुभुजः दुर्धरः वाग्मी, महेन्द्रः वसुदः वसुः। नैकरूपः बृहद्रूपः, शिपिविष्टः प्रकाशनः॥

**ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः। ऋद्धः स्पष्टाक्षरो मन्त्र-श्चन्द्रांशु-र्भास्करद्युतिः॥30॥**

ओजस्तेजोद्युतिधरः, प्रकाशात्मा प्रतापनः। ऋद्धः स्पष्टाक्षरः मन्त्रः, चन्द्रांशुः भास्करद्युतिः॥

**अमृतांशूद्भवो भानुः शशबिन्दुः सुरेश्वरः। औषधं जगतः सेतुः सत्यधर्मपराक्रमः॥31॥**

अमृतांशूद्भवः भानुः, शशबिन्दुः सुरेश्वरः। औषधम् जगतः सेतुः, सत्यधर्मपराक्रमः॥

**भूतभव्यभवन्नाथः पवनः पावनोऽनलः। कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः॥32॥**

भूतभव्यभवन्नाथः, पवनः पावनः अनलः। कामहा कामकृत् कान्तः, कामः कामप्रदः प्रभुः॥

**युगादिकृद्युगावर्ता नैकमायो महाशनः। अदृश्योऽव्यक्तरूपश्च सहस्त्रजिदनन्तजित्॥33॥**

युगादिकृत् युगावर्ताः, नैकमायः महाशनः। अदृश्यः अव्यक्तरूपः, सहस्त्रजित् अनन्तजित्॥

**इष्टोऽविशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः। क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः॥34॥**

इष्टः अविशिष्टः शिष्टेष्टः, शिखण्डी नहुषः वृषः। क्रोधहा क्रोधकृत्कर्ता, विश्वबाहुः महीधरः॥

**अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः। अपां निधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः॥35॥**

अच्युतः प्रथितः प्राणः, प्राणदः वासवानुजः। अपां निधिः अधिष्ठानम्, अप्रमत्तः प्रतिष्ठितः॥

**स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः। वासुदेवो बृहद्भानुरादिदेवः पुरंदरः॥36॥**

स्कन्दः स्कन्दधरः धुर्यः, वरदः वायुवाहनः। वासुदेवः बृहद्भानुः, आदिदेवः पुरंदरः॥

**अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः। अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः॥37॥**

अशोकः तारणः तारः, शूरः शौरिः जनेश्वरः। अनुकूलः शतावर्तः, पद्मी पद्मनिभेक्षणः॥

**पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत्। महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षो गरुडध्वजः॥38॥**

पद्मनाभः अरविन्दाक्षः, पद्मगर्भः शरीरभृत्। महर्द्धिः ऋद्धः वृद्धात्मा, महाक्षः गरुडध्वजः॥

**अतुलः शरभो भीमः समयज्ञो हविर्हरिः। सर्वलक्षणलक्षण्यो लक्ष्मीवान्समितिञ्जयः॥39॥**

अतुलः शरभः भीमः, समयज्ञः हविर्हरिः। सर्वलक्षणलक्षण्यः, लक्ष्मीवान् समितिञ्जयः॥

**विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः। महीधरो महाभागो वेगवानमिताशनः॥40॥**

विक्षरः रोहितः मार्गः, हेतुः दामोदरः सहः। महीधरः महाभागः, वेगवान् अमिताशनः॥

**उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः। करणं कारणं कर्ता विकर्ता गहनो गुहः ॥41॥**
उद्भवः क्षोभणः देवः, श्रीगर्भः परमेश्वरः। करणम् कारणम् कर्ता, विकर्ता गहनः गुहः ॥

**व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः। परर्द्धिः परमस्पष्टस्तुष्टः पुष्टः शुभेक्षणः ॥42॥**
व्यवसायः व्यवस्थानः, संस्थानः स्थानदः ध्रुवः। परर्द्धिः परमस्पष्टः, तुष्टः पुष्टः शुभेक्षणः ॥

**रामो विरामो विरजो मार्गो नेयो नयोऽनयः। वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥43॥**
रामः विरामः विरजः, मार्गः नेयः नयः अनयः। वीरः शक्तिमतां श्रेष्ठः, धर्मः धर्मविदुत्तमः ॥

**वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः। हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥44॥**
वैकुण्ठः पुरुषः प्राणः, प्राणदः प्रणवः पृथुः। हिरण्यगर्भः शत्रुघ्नः, व्याप्तः वायुः अधोक्षजः ॥

**ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः। उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥45॥**
ऋतुः सुदर्शनः कालः, परमेष्ठी परिग्रहः। उग्रः संवत्सरः दक्षः, विश्रामः विश्वदक्षिणः ॥

**विस्तारः स्थावरस्थाणुः प्रमाणं बीजमव्ययम्। अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥46॥**
विस्तारः स्थावरस्थाणुः, प्रमाणम् बीजम् अव्ययम्। अर्थः अनर्थः महाकोशः, महाभोगः महाधनः ॥

**अनिर्विण्णः स्थविष्ठोऽभूर्धर्मयूपो महामखः। नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ॥47॥**
अनिर्विण्णः स्थविष्ठः अभूः, धर्मयूपः महामखः। नक्षत्रनेमिः नक्षत्री, क्षमः क्षामः समीहनः ॥

**यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः। सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥48॥**
यज्ञः इज्यः महेज्यः, क्रतुः सत्रम् सतां गतिः। सर्वदर्शी विमुक्तात्मा, सर्वज्ञः ज्ञानम् उत्तमम् ॥

**सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत्। मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥49॥**
सुव्रतः सुमुखः सूक्ष्मः, सुघोषः सुखदः सुहृत्। मनोहरः जितक्रोधः, वीरबाहुः विदारणः ॥

**स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत्। वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥50॥**
स्वापनः स्ववशः व्यापी, नैकात्मा नैककर्मकृत्। वत्सरः वत्सलः वत्सी, रत्नगर्भः धनेश्वरः ॥

**धर्मगुब्धर्मकृद्धर्मी सदसत्क्षरमक्षरम्। अविज्ञाता सहस्त्रांशुर्विधाता कृतलक्षणः ॥51॥**
धर्मगुप् धर्मकृत् धर्मी, सत् असत् क्षरम् अक्षरम्। अविज्ञाता सहस्त्रांशुः, विधाता कृतलक्षणः ॥

**गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः। आदिदेवो महादेवो देवेशो देवभृद्गरुः ॥52॥**
गभस्तिनेमिः सत्त्वस्थः, सिंहः भूतमहेश्वरः। आदिदेवः महादेवः, देवेशः देवभृद्गरुः ॥

**उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः। शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ॥53॥**
उत्तरः गोपतिः गोप्ता, ज्ञानगम्यः पुरातनः। शरीरभूतभृत् भोक्ता, कपीन्द्रः भूरिदक्षिणः ॥

**सोमपोऽमृतपः सोमः पुरुजित्पुरुसत्तमः। विनयो जयः सत्यसंधो दाशार्हः सात्वतां पतिः ॥54॥**
सोमपः अमृतपः सोमः, पुरुजित् पुरुसत्तमः। विनयः जयः सत्यसंधः, दाशार्हः सात्वतां पतिः ॥

**जीवो विनयितासाक्षी मुकुन्दोऽमितविक्रमः। अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥55॥**
जीवः विनयितासाक्षी, मुकुन्दः अमितविक्रमः। अम्भोनिधिः अनन्तात्मा, महोदधिशयः अन्तकः ॥

**अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः। आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः॥56॥**

अजः महार्हः स्वाभाव्यः, जितामित्रः प्रमोदनः। आनन्दः नन्दनः नन्दः, सत्यधर्मा त्रिविक्रमः॥

**महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः। त्रिपदस्त्रिदशाध्यक्षो महाश्रृङ्गः कृतान्तकृत्॥57॥**

महर्षिः कपिलाचार्यः, कृतज्ञः मेदिनीपतिः। त्रिपदः त्रिदशाध्यक्षः, महाश्रृङ्गः कृतान्तकृत्॥

**महावराहो गोविन्दः सुषेणः कनकाङगदी। गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः॥58॥**

महावराहः गोविन्दः, सुषेणः कनकाङगदी। गुह्यः गभीरः गहनः, गुप्तः चक्रगदाधरः॥

**वेधाः स्वाङ्गोऽजितः कृष्णोदृढः संकर्षणोऽच्युतः। वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः॥59॥**

वेधाः स्वाङ्गः अजितः कृष्णः, दृढः सङकर्षणोः अच्युतः। वरुणः वारुणः वृक्षः, पुष्कराक्षः महामनाः॥

**भगवान् भगहानन्दी वनमाली हलायुधः। आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः॥60॥**

भगवान् भगहा आनन्दी, वनमाली हलायुधः। आदित्यः ज्योतिरादित्यः, सहिष्णुः गतिसत्तमः॥

**सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः। दिविस्पृक्सर्वदृग्व्यासो वाचस्पतिरयोनिजः॥61॥**

सुधन्वा खण्डपरशुः, दारुणः द्रविणप्रदः। दिविस्पृक् सर्वदृग्व्यासः, वाचस्पतिरयोनिजः॥

**त्रिसामा सामगः साम निर्वाणं भेषजं भिषक्। संन्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणम्॥62॥**

त्रिसामा सामगः साम, निर्वाणम् भेषजम् भिषक्। संन्यासकृत् शमः शान्तः, निष्ठा शान्तिः परायणम्॥

**शुभांङ्गः शान्तिदः स्त्रष्टा कुमुदः कुवलेशयः। गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः॥63॥**

शुभांङ्गः शान्तिदः स्त्रष्टा, कुमुदः कुवलेशयः। गोहितः गोपतिः गोप्ता, वृषभाक्षः वृषप्रियः॥

**अनिवर्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः। श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतांवरः॥64॥**

अनिवर्ती निवृत्तात्मा, संक्षेप्ता क्षेमकृत् शिवः। श्रीवत्सवक्षाः श्रीवासः, श्रीपतिः श्रीमतांवरः॥

**श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः। श्रीधरः श्रीकरः श्रेयः श्रीमाँल्लोकत्रयाश्रयः॥65॥**

श्रीदः श्रीशः श्रीनिवासः, श्रीनिधिः श्रीविभावनः। श्रीधरः श्रीकरः श्रेयः, श्रीमान् लोकत्रयाश्रयः॥

**स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः। विजितात्मा विधेयात्मा सत्कीर्तिश्छिन्नसंशयः॥66॥**

स्वक्षः स्वङ्गः शतानन्दः, नन्दिः ज्योतिर्गणेश्वरः। विजितात्मा अविधेयात्मा, सत्कीर्तिः छिन्नसंशयः॥

**उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतस्थिरः। भूशयो भूषणो भूतिर्विशोकः शोकनाशनः॥67॥**

उदीर्णः सर्वतश्चक्षुः, अनीशः शाश्वतस्थिरः। भूशयः भूषणः भूतिः, विशोकः शोकनाशनः॥

**अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः। अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः॥68॥**

अर्चिष्मान् अर्चितः कुम्भः, विशुद्धात्मा विशोधनः। अनिरुद्धः अप्रतिरथः, प्रद्युम्नः अमितविक्रमः॥

**कालनेमिनिहा वीरः शौरिः शूरजनेश्वरः। त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः॥69॥**

कालनेमिनिहा वीरः, शौरिः शूरजनेश्वरः। त्रिलोकात्मा त्रिलोकेशः, केशवः केशिहा हरिः॥

**कामदेवः कामपालः कामी कान्तः कृतागमः। अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनंजयः॥70॥**

कामदेवः कामपालः, कामी कान्तः कृतागमः। अनिर्देश्यवपुः विष्णुः, वीरः अनन्तः धनंजयः॥

**ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्धनः। ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः॥71॥**
ब्रह्मण्यः ब्रह्मकृत् ब्रह्मा, ब्रह्म ब्रह्मविवर्धनः। ब्रह्मवित् ब्राह्मणः ब्रह्मी, ब्रह्मज्ञः ब्राह्मणप्रियः॥

**महाक्रमो महाकर्मा महातेजा महोरगः। महाक्रतुर्महायज्वा महायज्ञो महाहविः॥72॥**
महाक्रमः महाकर्मा, महातेजाः महोरगः। महाक्रतुः महायज्वा, महायज्ञः महाहविः॥

**स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः। पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः॥73॥**
स्तव्यः स्तवप्रियः स्तोत्रम्, स्तुतिः स्तोता रणप्रियः। पूर्णः पूरयिता पुण्यः, पुण्यकीर्तिः अनामयः॥

**मनोजवस्तीर्थकरो वसुरेता वसुप्रदः। वसुप्रदो वासुदेवो वसुर्वसुमना हविः॥74॥**
मनोजवः तीर्थकरः, वसुरेताः वसुप्रदः। वसुप्रदो वासुदेवः, वसुः वसुमनाः हविः॥

**सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः। शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः॥75॥**
सद्गतिः सत्कृतिः सत्ता, सद्भूतिः सत्परायणः। शूरसेनः यदुश्रेष्ठः, सन्निवासः सुयामुनः॥

**भूतावासो वासुदेवः सर्वासुनिलयोऽनलः। दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः॥76॥**
भूतावासः वासुदेवः, सर्वासुनिलयः अनलः। दर्पहा दर्पदः दृप्तः, दुर्धरः अपराजितः॥

**विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान्। अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः॥77॥**
विश्वमूर्तिः महामूर्तिः, दीप्तमूर्तिः अमूर्तिमान्। अनेकमूर्तिः अव्यक्तः, शतमूर्तिः शताननः॥

**एको नैकः सवः कः किं यत्तत्पदमनुत्तमम्। लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः॥78॥**
एकः नैकः सवः कः किम्, यत् तत् पदमनुत्तमम्। लोकबन्धुः लोकनाथः, माधवः भक्तवत्सलः॥

**सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी। वीरहा विषमः शून्यो घृताशीरचलश्चलः॥79॥**
सुवर्णवर्णोः हेमाङ्गः, वराङ्गः चन्दनाङ्गदी। वीरहा विषमः शून्यः, घृताशीः अचलः चलः॥

**अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक्। सुमेधा मेधजो धन्यः सत्यमेधा धराधरः॥80॥**
अमानी मानदः मान्यः, लोकस्वामी त्रिलोकधृक्। सुमेधाः मेधजः धन्यः, सत्यमेधा धराधरः॥

**तेजोवृषो द्युतिधरः सर्वशस्त्रभृतां वरः। प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः॥81॥**
तेजोवृषः द्युतिधरः, सर्वशस्त्रभृतां वरः। प्रग्रहः निग्रहः व्यग्रः, नैकशृङ्गः गदाग्रजः॥

**चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः। चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात्॥82॥**
चतुर्मूर्तिः चतुर्बाहुः, चतुर्व्यूहः चतुर्गतिः। चतुरात्मा चतुर्भावः, चतुर्वेदवित् एकपात्॥

**समावर्तोऽनिवृत्तात्मा दुर्जयो दुरतिक्रमः। दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा॥83॥**
समावर्तोः अनिवृत्तात्मा, दुर्जयः दुरतिक्रमः। दुर्लभः दुर्गमः दुर्गः, दुरावासः दुरारिहा॥

**शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः। इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः॥84॥**
शुभाङ्गः लोकसारङ्गः, सुतन्तुः तन्तुवर्धनः। इन्द्रकर्मा महाकर्मा, कृतकर्मा कृतागमः॥

**उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः। अर्को वाजसनः शृङ्गी जयन्तः सर्वविज्जयी॥85॥**
उद्भवः सुन्दरः सुन्दः, रत्ननाभः सुलोचनः। अर्कः वाजसनः शृङ्गी, जयन्तः सर्वविज्जयी॥

**सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः। महाह्रदो महागर्तो महाभूतो महानिधिः॥86॥**

सुवर्णबिन्दुः अक्षोभ्यः, सर्ववागीश्वरेश्वरः। महाह्रदः महागर्तः, महाभूतः महानिधिः॥

**कुमुदः कुन्दरः कुन्दः पर्जन्यः पावनोऽनिलः। अमृताशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः॥87॥**

कुमुदः कुन्दरः कुन्दः, पर्जन्यः पावनः अनिलः। अमृताशः अमृतवपुः, सर्वज्ञः सर्वतोमुखः॥

**सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः। न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिषूदनः॥88॥**

सुलभः सुव्रतः सिद्धः, शत्रुजित् शत्रुतापनः। न्यग्रोधः उदुम्बरः अश्वत्थः, चाणूरान्ध्रनिषूदनः॥

**सहस्त्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः। अमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः॥89॥**

सहस्त्रार्चिः सप्तजिह्वः, सप्तैधाः सप्तवाहनः। अमूर्तिः अनघः अचिन्त्यः, भयकृत् भयनाशनः॥

**अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महान्। अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्द्धनः॥90॥**

अणुः बृहत् कृशः स्थूलः, गुणभृत् निर्गुणः महान्। अधृतः स्वधृतः स्वास्यः, प्राग्वंशः वंशवर्द्धनः॥

**भारभृत्कथितो योगी योगीशः सर्वकामदः। आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः॥91॥**

भारभृत् कथितः योगी, योगीशः सर्वकामदः। आश्रमः श्रमणः क्षामः, सुपर्णः वायुवाहनः॥

**धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः। अपराजितः सर्वसहो नियन्ता नियमोऽयमः॥92॥**

धनुर्धरः धनुर्वेदः, दण्डः दमयिता दमः। अपराजितः सर्वसहः, नियन्ता अनियमः अयमः॥

**सत्त्ववान् सात्त्विकः सत्यः सत्यधर्मपरायणः। अभिप्रायः प्रियार्होऽर्हः प्रियकृत्प्रीतिवर्धनः॥93॥**

सत्त्ववान् सात्त्विकः सत्यः, सत्यधर्मपरायणः। अभिप्रायः प्रियार्हः अर्हः, प्रियकृत प्रीतिवर्धनः॥

**विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः। रविर्विरोचनः सूर्यः सविता रविलोचनः॥94॥**

विहायसगतिः ज्योतिः, सुरुचिः हुतभुक् विभुः। रविः विरोचनः सूर्यः, सविता रविलोचनः॥

**अनन्तो हुतभुग्भोक्ता सुखदो नैकजोऽग्रजः। अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः॥95॥**

अनन्तः हुतभुक् भोक्ता, सुखदः नैकजः अग्रजः। अनिर्विण्णः सदामर्षी, लोकाधिष्ठानम् अद्भुतः॥

**सनात्सनातनतमः कपिलः कपिरप्ययः। स्वस्तिदः स्वस्तिकृत्स्वस्ति स्वस्तिभुक्स्वस्तिदक्षिणः॥96॥**

सनात् सनातनतमः, कपिलः कपिः अप्ययः। स्वस्तिदः स्वस्तिकृत् स्वस्ति, स्वस्तिभुक् स्वस्तिदक्षिणः॥

**अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः। शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः॥97॥**

अरौद्रः कुण्डली चक्री, विक्रमी ऊर्जितशासनः। शब्दातिगः शब्दसहः, शिशिरः शर्वरीकरः॥

**अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः। विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः॥98॥**

अक्रूरः पेशलः दक्षः, दक्षिणः क्षमिणां वरः। विद्वत्तमः वीतभयः, पुण्यश्रवणकीर्तनः॥

**उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः। वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः॥99॥**

उत्तारणः दुष्कृतिहा, पुण्यः दुःस्वप्ननाशनः। वीरहा रक्षणः सन्तः, जीवनः पर्यवस्थितः॥

**अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः। चतुरस्त्रो गभीरात्मा विदिशो व्यादिशो दिशः॥100॥**

अनन्तरूपः अनन्तश्रीः, जितमन्युः भयापहः। चतुरस्त्रः गभीरात्मा, विदिशः व्यादिशः दिशः॥

**अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः। जननो जनजन्मादिर्भीमो भीमपराक्रमः॥101॥**

अनादिः भूर्भुवः लक्ष्मीः, सुवीरः रुचिराङ्गदः। जननः जनजन्मादिः, भीमः भीमपराक्रमः॥

**आधारनिलयोऽधाता पुष्पहासः प्रजागरः। ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः॥102॥**

आधारनिलयः अधाता, पुष्पहासः प्रजागरः। ऊर्ध्वगः सत्पथाचारः, प्राणदः प्रणवः पणः॥

**प्रमाणं प्राणनिलयः प्राणभृत्प्राणजीवनः। तत्त्वं तत्त्वविदेकात्मा जन्मृत्युजरातिगः॥103॥**

प्रमाणम् प्राणनिलयः, प्राणभृत् प्राणजीवनः। तत्त्वम् तत्त्ववित् एकात्मा, जन्मृत्युजरातिगः॥

**भूर्भुवः स्वस्तरुस्तारः सविता प्रपितामहः। यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः॥104॥**

भूर्भुवः स्वस्तरुः तारः, सविता प्रपितामहः। यज्ञः यज्ञपतिः यज्वा, यज्ञाङ्गः यज्ञवाहनः॥

**यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः। यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव च॥105॥**

यज्ञभृत् यज्ञकृत् यज्ञी, यज्ञभुक् यज्ञसाधनः। यज्ञान्तकृत् यज्ञगुह्यम्, अन्नम् अन्नादः एव च॥

**आत्मयोनिः स्वयंजातो वैखानः सामगायनः। देवकीनन्दनः स्त्रष्टा क्षितीशः पापनाशनः॥106॥**

आत्मयोनिः स्वयंजातः, वैखानः सामगायनः। देवकीनन्दनः स्त्रष्टा, क्षितीशः पापनाशनः॥

**शङ्खभृन्नन्दकी चक्री शार्गङ्धन्वा गदाधरः। रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः॥107॥**

शङ्खभृत् नन्दकी चक्री, शार्गङ्धन्वा गदाधरः। रथाङ्गपाणिः अक्षोभ्यः, सर्वप्रहरणायुधः॥

॥ सर्व प्रहरणायुध ॐ नम इति॥

(तीन बार)

श्री राम राम रामेति रमे रामे मनोरमे।

सहस्त्रनामत् तुल्यं राम नाम वरानने॥

श्री राम नाम वरानने

ॐ नमः इति

| | |
|---|---|
| अष्टलक्ष्म्यै प्रणाम | 1. ॐ आद्य लक्ष्म्यै नमः<br>2. ॐ विद्या लक्ष्म्यै नमः<br>3. ॐ सौभाग्य लक्ष्म्यै नमः<br>4. ॐ अमृत लक्ष्म्यै नमः<br>5. ॐ काल लक्ष्म्यै नमः<br>6. ॐ सत्य लक्ष्म्यै नमः<br>7. ॐ भोग लक्ष्म्यै नमः<br>8. ॐ योग लक्ष्म्यै नमः |
| क्षमा मंत्र | करचरणकृतं वाक्कायजं कर्मजं वा, श्रवण नयनजं वा मानसं वापराधाम्।<br>विहितमविहितं वा सर्वमेतत्क्षमस्व, जय जय करुणाब्धे श्री महादेव शम्भो॥ |
| प्रणाम मंत्र | ॐ कृष्णायं वासुदेवाय हरये परमात्मने,<br>प्रणतः क्लेशनाशाय गोविन्दाय नमो नमः॥ |
| सूर्य भगवान | ॐ घृणिः सूर्य आदित्योम्॥ |
| महामृत्युन्जय मंत्रम् | ॐ त्रयम्बकं यजामहे सुगन्धिम् पुष्टि वर्धनम्।<br>उर्वारुक मिव बंधनान् मृत्योर्मुक्षीय मामृतात्॥ |

वक्रतुण्ड महाकाय सूर्य कोटि समप्रभा।
निर्विघ्नं कुरु मे देव सर्व कार्येषु सर्वदा॥

यत्र, योगेश्वरः कृष्णः यत्र, पार्थः, धनुर्धरः,
तत्र, श्रीः, विजयः, भूतिः, ध्रुवा, नीतिः, मतिः, मम॥

लोकाभिरामं रणरङ्गधीरं राजीवनेत्रं रघुवंशनाथम्।
कारुण्यरूपं करुणाकरं तं श्रीरामचन्द्रंशरणं प्रपद्ये॥
मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम्।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये॥